# THE

# MANUSMṚTI

WITH THE COMMENTARY

## MANVARTHAMUKTĀVALI

OF

## KULLŪKA,

VARIOUS READINGS, FOOT-NOTES, INDICES ETC.,

TENTH EDITION

EDITED WITH CRITICAL & EXPLANATORY NOTES ETC.,

BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTHA"

PUBLISHED BY

SATYABHĀMĀBĀĪ PĀṆḌURAṄG,

FOR THE NIRṆAYA SĀGAR PRESS,

BOMBAY



# प्रास्ताविकम् ।

इह खलु जगति सर्वे मनुष्यप्रभृतयः स्थावरान्ताः प्रादुर्भवन्तः परिणममाना-स्तिरोभवन्तश्चैकसूत्रनिगडिताः सन्तो वर्तन्तामितीयं जगत्पालयितुरिच्छा दृश्यते। आपाततस्तु तिर्यञ्चः स्थावरा ये चामीभ्यः प्रत्यञ्चो ब्राह्मणक्षत्रविट्शूद्रास्ते सर्वे भिन्नां भिन्नां सरणिमनुरुन्धाना व्यवहरन्ति, नह्येतावदेवापि तु प्रतिपिण्डं भिन्ना इति प्रतिभासन्ते स्थूलदृशाम्, एवमपि सूक्ष्मविचारणायामेकसूत्रनियन्त्रितत्वमेव सुसमञ्जसं भवति। तद्यथा—ते ते जनिमन्तस्तादृशीं तादृशीं योनिमापन्नास्तत्तदा-काररूपपरिमाणशीला अवलोक्यन्ते। नहि कदाचित्केनचित्स्थावरो मानुषाकारादि-भाग्दृष्टः। नवा मनुष्यस्तिर्यग्धर्ममुद्वहन्दृश्यते। तदेवं निपुणं निरूप्यमाणे किम-प्येकं सूत्रमालम्बयन्निदं जगत्स्वेषु स्वेष्वधिकारेषु नियतं वर्तत इति स्थिरीभवति। तदेवाधिष्ठानभूतं सूत्रं प्रति धर्म इत्याचक्षते मनुव्यासवसिष्ठादयः परमर्षयः। तथा **'धर्मे सर्वं प्रतिष्ठितम्'** इति ब्रुवन्व्यक्तं सर्वशब्दवाच्यजगत्प्रतिष्ठाकारणं धर्म इत्याख्यापयति। सर्वशब्दवाच्यस्य जगतोऽस्य विचित्रतरप्रपञ्चजालरचनाया-स्तद्भावे सत्त्वात्तदभावे चाभावाद्युक्तमेवैतत्। पञ्चमवेदाभिख्यस्यातिगभीरस्य सर्व-ज्ञानाकरस्य भारतस्यापि तात्पर्यमिदमेवेति ज्ञातव्यम्। तथा हि **'न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः। धर्मो नित्यः सुखदुःखे त्वनित्ये'** इति भारतसावित्रीत्वेन वसन्ते पिक इव पञ्चमं, मधुरं जेगीयते ततोऽ-वगच्छाम धर्मः परमं कारणमिति। भगवानपि **'स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः'** इति कर्मशब्देन धर्ममभिलषंस्तदभिरतो निःश्रेयसं लभत इत्यर्जु-नाय निजैकभक्तायोपदिदेश। अयमेवार्थः श्रुतिस्मृतीतिहासपुराणेष्वाहत्याहत्यो-द्घोष्यत इति विपश्चिद्वरैः समीक्षणीयम्। तस्मात्पूर्वपूर्वार्जितधर्मेण तां तां दैवीं मानुषीं वा नारकीं वा प्रतिनियतस्वभावफलविचित्रां स्थितिं सर्वो लभत इत्युप-पद्यते। न ह्येतत्सर्वं तत्प्रसिद्धमर्थमनभ्युपगम्यमानैर्लोकस्थितिकारणमनुगतं सुवचं समञ्जसं चोदाहर्तुं शक्यमिति तत्रनिपुणैर्विचक्षणवरेण्यैः समीक्षणीयमित्यप्रास-ङ्गिकविस्तरभियोपरम्य प्रकृतग्रन्थप्रस्ताविकोपयोगि किंचिदुल्लिख्यते।

**मानवे**ऽस्मिन्नतिमहनीयधर्मग्रन्थे प्रथममुद्रणावसरे प्राथमिकत्वाद्धेतोर्जातान्य-संगतपदरचनावदवाक्यरचनाब्रह्ममीमांसासूत्रविपर्यासमन्त्रापपाठेत्यादीन्यशुद्धानि परिमार्ज्य, पादशः **श्लोकानुक्रमणिकां** चाद्ययावत्क्वापि दृग्गोचरामुपनिबध्य, विषयानुक्रममपि संगृह्य महतायासेन सपरिष्कारं सावधानं च संशोध्य धार्मिक-विपश्चितामुपायनीकृतोऽयं ग्रन्थः। एवमपि यत्र क्वचिदस्मादृशाल्पप्रज्ञजनाल्पदृष्टि-मतिदोषसुलभसंभवा मुद्रकदोषसंभवा वा अशुद्धयो दृक्पथमापतेयुश्चेद्विदुषां तर्हि स्खलनैकशीलत्वं मानवीयज्ञानस्य परिभावयन्तो धीमन्तः क्षम्येरन्निति बाढं विश्वसिति नश्चेतः।

इदमेकं च विज्ञापनीयमास्ते यदेवं महतायासेन शोधिता, सौलभ्येन लाभार्थं चाल्पमूल्या, वैदिकधर्मैकप्रतिपादिका चेयं मनुस्मृतिश्चिरं स्मारयतु वेदप्रणिहितं धर्मं, कालत्रयं च विलसतु धार्मिकानां हृदये कादम्बिन्यामिव सौदामिनी, वित-रतु च नैःश्रेयसं तदभिलाषुकाणां, वर्धयतु च धर्मग्रन्थानुवचनरुचिमार्याणाम्। तेन च तत्रभवतो ग्रन्थनिर्मातुरस्मदीयाल्पश्रमस्यापि साफल्यं भवत्विति विज्ञाप्य श्रुतिस्मृतिजनयितुर्भगवतो धर्मरूपस्य स्वयंज्योतिषः प्रसादादेतत्सफलं भवत्विति तमाराधयामेति शिवमिति—

रामचन्द्रशर्माणः।

# मनुसंहितास्थविषयानुक्रमः ।

## प्रथमोऽध्यायः ।

## तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।

## पञ्चमोऽध्यायः ।

## षष्ठोऽध्यायः ।

## सप्तमोऽध्यायः ।

## अष्टमोऽध्यायः ।

## नवमोऽध्यायः ।

## द्वादशोऽध्यायः ।

संपूर्णोऽयं मनुस्मृतिविषयानुक्रमः ।



# मनुस्मृतिः

## कुल्लूकभट्टकृतमन्वर्थमुक्तावलीसंवलिता ।

### प्रथमोऽध्यायः १

मनुमेकाग्रमासीनमभिगम्य महर्षयः ।
प्रतिपूज्य यथान्यायमिदं वचनमब्रुवन् ॥ १ ॥

ॐ नमो भगवते वासुदेवाय ।

गौडे नन्दनवासिनाम्नि सुजनैर्वन्द्ये वरेन्द्र्यां कुले
श्रीमद्भट्टदिवाकरस्य तनयः कुल्लूकभट्टोऽभवत् ।
काश्यामुत्तरवाहिजह्नुतनयातीरे समं पण्डितै-
स्तेनेयं क्रियते हिताय विदुषां मन्वर्थमुक्तावली ॥ १ ॥
सर्वज्ञस्य मनोरसर्वविदपि व्याख्यामि यद्वाङ्मयं
युक्त्या तद्बहुभिर्यतो मुनिवरैरेतद्बहु व्याहृतम् ।
तां व्याख्यामधुनातनैरपि कृतां न्याय्यां ब्रुवाणस्य मे
भक्त्या मानववाङ्मये भवभिदे भूयादशेषेश्वरः ॥ २ ॥
मीमांसे बहु सेवितासि सुहृदस्तर्काः समस्ताः स्थ मे
वेदान्ताः परमात्मबोधगुरवो यूयं मयोपासिताः ।
जाता व्याकरणानि बालसखिता युष्माभिरभ्यर्थये
प्राप्तोऽयं समयो मनूक्तविवृतौ साहाय्यमालम्ब्यताम् ॥ ३ ॥
द्वेषादिदोषरहितस्य सतां हिताय मन्वर्थतत्त्वकथनाय ममोद्यतस्य ।
दैवाद्यदि क्वचिदिह स्खलनं तथापि निस्तारको भवतु मे जगदन्तरात्मा ॥ ४ ॥
मानववृत्तावस्यां ज्ञेया व्याख्या नवा मयोद्भिन्ना ।
प्राचीना अपि रुचिरा व्याख्यातॄणामशेषाणाम् ॥ ५ ॥

मनुमेकाग्रमासीनमित्यादि ॥ अत्र महर्षीणां धर्मविषयप्रश्ने मनोः 'श्रूयताम्' (१।४) इत्युत्तरदानपर्यन्तश्लोकचतुष्टयेनैतस्य शास्त्रस्य प्रेक्षावत्प्रवृत्त्युपयुक्तानि विषयसंबन्धप्रयोजनान्युक्तानि। तत्र धर्म एव विषयः। तेन सह वचनसंदर्भरूपस्य मानवशास्त्रस्य प्रतिपाद्यप्रतिपादकलक्षणः संबन्धः। प्रमाणान्तरासन्निकृष्टस्य स्वर्गापवर्गादिसाधनस्य धर्मस्य शास्त्रैकगम्यत्वात् । प्रयोजनं तु स्वर्गापवर्गादि, तस्य धर्माधीनत्वात् । यद्यपि पत्युपगमनादिरूपः कामोऽप्यत्राभि-

हितस्तथापि 'ऋतुकालाभिगामी स्यात्स्वदारनिरतः सदा' ( ३।४५ ) इत्यृतुकालादिनियमेन सोऽपि धर्म एव। एवं चार्थार्जनमपि 'ऋतामृताभ्यां जीवेत' (४।४) इत्यादिनियमेन धर्म एवेत्यवगन्तव्यम्। मोक्षोपायत्वेनाभिहितस्यात्मज्ञानस्यापि धर्मत्वाद्धर्मविषयत्वं मोक्षोपदेशकत्वं चास्य शास्त्रस्योपपन्नम्। पौरुषेयत्वेऽपि मनुवाक्यानामविगीतमहाजनपरिग्रहाच्छ्रुत्युपग्रहाच्च वेदमूलकतया प्रामाण्यम्। तथा च छान्दोग्यब्राह्मणे श्रूयते–'मनुर्वै यत्किंचिदवदत्तद्भेषजं भेषजतायाः' इति। बृहस्पतिरप्याह–'वेदार्थोपनिबद्धत्वात्प्राधान्यं हि मनोः स्मृतम्। मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते॥ तावच्छास्त्राणि शोभन्ते तर्कव्याकरणानि च। धर्मार्थमोक्षोपदेष्टा मनुर्यावन्न दृश्यते॥' महाभारतेऽप्युक्तम्–'पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम्। आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः॥' विरोधिबौद्धादितर्कैर्न हन्तव्यानि। अनुकूलस्तु मीमांसादितर्कः प्रवर्तनीय एव। अत एव वक्ष्यति (१२।१०६)–'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥' इति। सकलवेदार्थादिमननान्मनुं महर्षय इदं द्वितीयश्लोकवाक्यरूपमुच्यतेऽनेनेति वचनमब्रुवन्। श्लोकस्यादौ मनुनिर्देशो मङ्गलार्थः। परात्मन एव संसारस्थितये सार्वज्ञ्यैश्वर्यादिसंपन्नमनुरूपेण प्रादुर्भूतत्वात्तदभिधानस्य मङ्गलातिशयत्वात्। वक्ष्यति हि (१२।१२३)–'एनमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम्' इति। एकाग्रं विषयान्तराव्याक्षिप्तचित्तम्। आसीनं सुखोपविष्टम्। ईदृशस्यैव महर्षिप्रश्नोत्तरदानयोग्यत्वात्। अभिगम्याभिमुखं गत्वा। महर्षयो महान्तश्च ये ऋषयश्चेति तथा। प्रतिपूज्य पूजयित्वा। यद्वा मनुना पूर्वं स्वागतासनदानादिना पूजितास्तस्य पूजां कृत्वेति प्रतिशब्दादवगम्यते। यथान्यायं येन न्यायेन विधानेन प्रश्नः कर्तुं युज्यते प्रणतिभक्तिश्रद्धातिशयादिना। वक्ष्यति च (२।११०)–'नापृष्टः कस्यचिद्ब्रूयान्न चान्यायेन पृच्छतः' इति। 'अभिगम्य, प्रतिपूज्य, अब्रुवन्' इति क्रियात्रयेऽपि मनुमित्येव कर्म। अब्रुवन्नित्यत्राकथितकर्मता। ब्रुविधातोर्द्विकर्मकत्वात्॥ १॥

किमब्रुवन्नित्यपेक्षायामाह—

**भगवन्सर्ववर्णानां यथावदनुपूर्वशः।**
**अन्तरप्रभवाणां च धर्मान्नो वक्तुमर्हसि॥ २॥**

भगवन्नित्यादि॥ ऐश्वर्यादीनां 'भग'शब्दो वाचकः। तदुक्तं विष्णुपुराणे–'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना॥' इति। मतुबन्तेन संबोधनं भगवन्निति। वर्णा ब्राह्मणक्षत्रियवैश्य-

पाठा०—1 इतीरणा.

१ तथा चोक्तम्–'ऋचो यजूंषि सामानि मन्त्रा आथर्वणाश्च ये। सप्तर्षिभिस्तु यत्प्रोक्तं तत्सर्वं मनुरब्रवीत्' इति।

२ यद्वा, न्यायस्तु शास्त्रमर्यादेत्यभिधीयते, तदनुगुणं वा वचनमिति ध्येयम्।

शूद्राः । सर्वे च ते वर्णाश्चेति सर्ववर्णाः, तेषामन्तरप्रभवाणां च संकीर्णजातीनां चापि अनुलोमप्रतिलोमजातानां अम्बष्ठक्षत्तृकर्णप्रभृतीनां तेषां विजातीयमैथुनसंभवत्वेन खरतुरगीयसंपर्काज्जाताश्वतरवज्जात्यन्तरत्वाद्वर्णशब्देनाग्रहणात्पृथक् प्रश्नः । एतेनास्य शास्त्रस्य सर्वोपकारकत्वं दर्शितम् । यथावत् यो धर्मो यस्य वर्णस्य येन प्रकारेणार्हतीत्यनेनाश्रमधर्मादीनामपि प्रश्नः । अनुपूर्वशः क्रमेण जातकर्म, तदनु नामधेयमित्यादिना । धर्मान्नोऽस्मभ्यं वक्तुमर्हसि सर्वधर्माभिधाने योग्यो भवसि तस्माद्ब्रूहीत्यध्येषणमध्याहार्यम् । यत्तु ब्रह्महत्यादिरूपाधर्मकीर्तनमप्यत्र तत् प्रायश्चित्तविधिरूपधर्मविषयत्वेन न स्वतन्त्रतया ॥ २ ॥

सकलधर्माभिधानयोग्यत्वे हेतुमाह—

**त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयंभुवः ।**
**अचिन्त्यस्याप्रमेयस्य कार्यतत्त्वार्थवित्प्रभो ॥ ३ ॥**

त्वमेक इत्यादिना ॥ हिशब्दो हेतौ । यस्मात्त्वमेकोऽद्वितीयः अस्य सर्वस्य प्रत्यक्षश्रुतस्य स्मृत्याद्यनुमेयस्य च विधानस्य विधीयन्तेऽनेन कर्माण्यग्निहोत्रादीनीति विधानं वेदस्तस्य स्वयंभुवोऽपौरुषेयस्याचिन्त्यस्य बहुशाखाविभिन्नत्वादियत्तया परिच्छेत्तुमयोग्यस्य, अप्रमेयस्य मीमांसादिन्यायनिरपेक्षतयानवगम्यमानप्रमेयस्य, कार्यमनुष्ठेयमग्निष्टोमादि, तत्त्वं ब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' (तैत्ति. २।१।१) इत्यादि वेदान्तवेद्यं तदेवार्थः प्रतिपाद्यभागस्तं वेत्तीति कार्यतत्त्वार्थवित् । मेधातिथिस्तु कर्ममीमांसावासनया वेदस्य कार्यमेव तत्त्वरूपोऽर्थस्तं वेत्तीति कार्यतत्त्वार्थविदिति व्याचष्टे । तन्न । वेदानां ब्रह्मण्यपि प्रामाण्याभ्युपगमान्न कार्यमेव तत्त्वरूपोऽर्थः । धर्माधर्मव्यवस्थापनसमर्थत्वात् प्रभो इति संबोधनम् ॥ ३ ॥

**स तैः पृष्टस्तथा सम्यगमितौजा महात्मभिः ।**
**प्रत्युवाचार्च्य तान्सर्वान्महर्षीञ्छ्रूयतामिति ॥ ४ ॥**

**स तैः पृष्टस्तथा सम्यगित्यादि** ॥ स मनुस्तैर्महर्षिभिस्तथा तेन प्रकारेण पूर्वोक्तेन न्यायेन प्रणतिभक्तिश्रद्धातिशयादिना पृष्टस्तान्सम्यग्यथातत्त्वं प्रत्युवाच श्रूयतामित्युपक्रम्य। अमितमपरिच्छेद्यमोजः सामर्थ्यं ज्ञानतत्त्वाभिधानादौ यस्य स तथा । अत एव सर्वज्ञसर्वशक्तितया महर्षीणामपि प्रश्नविषयः । महात्मभिर्महानुभावैः । अार्च्य पूजयित्वा । आङ्पूर्वस्यार्चतेर्ल्यबन्तस्य रूपमिदम् । धर्मस्याभिधानमपि पूजनपुरःसरमेव कर्तव्यमित्यनेन फलितम् । ननु मनुप्रणीतत्वेऽस्य शास्त्रस्य 'स पृष्टः प्रत्युवाच' इति न युक्तम्, 'अहं पृष्टो ब्रवीमि' इति युज्यते । अन्यप्रणीतत्वे च कथं मानवीयसंहितेति ? उच्यते—

प्रायेणाचार्याणामियं शैली यत्स्वाभिप्रायमपि परोपदेशमिव वर्णयन्ति; अत एव 'कर्माण्यपि जैमिनिः फलार्थत्वात्' (जै.न्या.सू.३।१।४) इति जैमिनेरेव सूत्रम्। अत एव 'तदुपर्यपि बादरायणः संभवात्' (ब्र. सू. १।३।२६) इति बादरायणस्यैव शारीरकसूत्रम्। अथवा मनूपदिष्टा धर्मास्तच्छिष्येण भृगुणा तदाज्ञयोपनिबद्धाः। अत एव वक्ष्यति (१।५९)–'एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः' इति। अतो युज्यत एव स पृष्टः प्रत्युवाचेति। मनूपदिष्टधर्मोपनिबद्धत्वाच्च मानवीयसंहितेति व्यपदेशः ॥ ४ ॥

श्रूयतामित्युपक्षिप्तमर्थमाह—

**आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्।**
**अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ५ ॥**

आसीदिदमिति ॥ ननु मुनीनां धर्मविषयप्रश्ने तत्रैवोत्तरं दातुमुचितं, तत्कोऽयमप्रस्तुतः प्रलयदशायां कारणलीनस्य जगतः सृष्टिप्रकरणावतारः? अत्र मेधातिथिः समादधे–शास्त्रस्य महाप्रयोजनत्वमनेन सर्वेण प्रतिपाद्यते। ब्रह्माद्याः स्थावरपर्यन्ताः संसारगतयो धर्माधर्मनिमित्ता अत्र प्रतिपाद्यन्ते— 'तमसा बहुरूपेण वेष्टिताः कर्महेतुना' (१।४९) इति। वक्ष्यति च (१२।२३)– 'एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा। धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः' इति। ततश्च निरतिशयैश्वर्यहेतुर्धर्मः, तद्विपरीतश्चाधर्मः, तद्रूपपरिज्ञानार्थमिदं शास्त्रं महाप्रयोजनमध्येतव्यम्, इत्याद्यध्यायतात्पर्यमित्यन्तेन। गोविन्दराजस्यापीदमेव समाधानम्। नैतन्मनोहरम्। धर्मस्वरूपप्रश्ने यद्धर्मस्य फलकीर्तनं तदप्यप्रस्तुतम्। धर्मोक्तिमात्राद्धि शास्त्रमर्थवत्। किंच 'कर्मणां फलनिर्वृत्तिं शंसेत्युक्ते महर्षिभिः। द्वादशे वक्ष्यमाणा सा वक्तुमादौ न युज्यते ॥' इदं तु वदामः–मुनीनां धर्मविषये प्रश्ने जगत्कारणतया ब्रह्मप्रतिपादनं धर्मकथनमेवेति नाप्रस्तुताभिधानम्। आत्मज्ञानस्यापि धर्मरूपत्वात्; मनुनैव(६।९२)–'धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्' इति दशविधधर्माभिधाने विद्याशब्दवाच्यमात्मज्ञानं धर्मत्वेनोक्तम्। महाभारतेऽपि–'आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप' इत्यात्मज्ञानं धर्मत्वेनोक्तम्। याज्ञवल्क्येन तु परमधर्मत्वेन यदुक्तम्–'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' (या.स्मृ.१।८) इति। जगत्कारणत्वं च ब्रह्मलक्षणम्। अत एव ब्रह्ममीमांसायाम् (ब्र. सू. १।१।१)–'अथातो ब्रह्मजिज्ञासा' इति सूत्रानन्तरं ब्रह्मलक्षणकथनाय 'जन्माद्यस्य यतः' (ब्र. सू. १।१।२) इति द्वितीयसूत्रं भगवान्बादरायणः प्रणिनाय। अस्य जगतो यतो जन्मादि सृष्टिस्थितिप्रलयमिति सूत्रार्थः। तथा च श्रुतिः (तैत्ति.३।१)–'यतो वा इमानि भूतानि

जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति' इति प्राधान्येन जगदुत्पत्तिस्थितिलयनिमित्तोपादानब्रह्मप्रतिपादनम् । आत्मज्ञानस्वरूपपरमधर्मावगमाय प्रथमाध्यायं कृत्वा संस्कारादिरूपं धर्मं तदङ्गतया द्वितीयाध्यायादिक्रमेण वक्ष्यतीति न कश्चिद्विरोधः॥ किंच प्रश्नोत्तरवाक्यानामेव स्वारस्यादयं मदुक्तोऽर्थो लभ्यते। तथा हि–'धर्मे पृष्टे मनुर्ब्रह्म जगतः कारणं ब्रुवन्। आत्मज्ञानं परं धर्मं वित्तेति व्यक्तमुक्तवान् ॥ प्राधान्यात्प्रथमाध्याये साधु तस्यैव कीर्तनम् । धर्मोऽन्यस्तु तदङ्गत्वाद्युक्तो वक्तुमनन्तरम् ॥' इदमित्यध्यक्षेण सर्वस्य प्रतिभासमानत्वाज्जगन्निर्दिश्यते । इदं जगत् तमोभूतं तमसि स्थितं लीनमासीत् । तमःशब्देन गुणवृत्त्या प्रकृतिर्निर्दिश्यते । तम इव तमः । यथा तमसि लीनाः पदार्था अध्यक्षेण न प्रकाश्यन्त एवं प्रकृतिलीना अपि भावा नावगम्यन्त इति गुणयोगः । प्रलयकाले सूक्ष्मरूपतया प्रकृतौ लीनमासीदित्यर्थः । तथा च श्रुतिः (ऋ.सं.८।७।१७)–'तम आसीत्तमसा गूहळमग्रे' इति प्रकृतिरपि ब्रह्मात्मनाऽव्याकृतासीत् । अत एव अप्रज्ञातमप्रत्यक्षं सकलप्रमाणश्रेष्ठतया प्रत्यक्षगोचरः प्रज्ञात इत्युच्यते, तन्न भवतीत्यप्रज्ञातम् । अलक्षणमननुमेयं लक्ष्यतेऽनेनेति लक्षणं लिङ्गं, तदस्य नासीति अलक्षणं अप्रतर्क्यं तर्कयितुमशक्यं तदानीं वाचकस्थूलशब्दाभावाच्छब्दतोऽप्यविज्ञेयम् । एतदेव च प्रमाणत्रयं सतर्कं द्वादशाध्याये मनुनाभ्युपगतं अत एवाविज्ञेयमित्यर्थापत्त्याद्यगोचरमिति धरणीधरस्यापि व्याख्यानम् । न च नासीदेवेति वाच्यम् । तदानीं श्रुतिसिद्धत्वात् । तथा च श्रूयते (बृ.१।४।७)–'तद्धेदं तर्ह्यव्याकृतमासीत्' । छान्दोग्योपनिषच्च ( ६।२।१ )—'सदेव सोम्येदमग्र आसीत्' । इदं जगत्सदेवासीत् । ब्रह्मात्मना आसीदित्यर्थः । सच्छब्दो ब्रह्मवाचकः । अत एव प्रसुप्तमिव सर्वतः । प्रथमार्थे तसिः । स्वकार्याक्षममित्यर्थः ॥ ५ ॥

अथ किमभूदित्याह—

ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादि वृत्तौजाः प्रादुरासीत्तमोनुदः ॥ ६ ॥

ततः स्वयंभूर्भगवानित्यादि ॥ ततः प्रलयावसानानन्तरं स्वयंभूः परमात्मा स्वयं भवति स्वेच्छया शरीरपरिग्रहं करोति, न त्वितरजीववत्कर्माधीनदेहः । तथा च श्रुतिः (छान्दो. ७।२६।२)–'स एकधा भवति द्विधा भवति' । भगवानैश्वर्यादिसंपन्नः । अव्यक्तो बाह्यकरणागोचरः । योगाभ्यासावसेय इति यावत् । इदं महाभूतादि । आकाशादीनि महाभूतानि । आदिग्रहणान्महदादीनि च व्यञ्जयन्नव्यक्तावस्थं प्रथमं सूक्ष्मरूपेण ततः स्थूलरूपेण प्रकाशयन् । वृत्तौजाः वृत्तमप्रतिहतमुच्यते । अत एव 'वृत्तिसर्गतायनेषु क्रमः' (पा.१।३।३८)

पाठा०—1 महाभूतानुवृत्तौजाः.

१ महाभूतादिषु पृथिव्यप्तेजोवाय्वाकाशमहदादिषु वृत्तं सदोजो वीर्यं सर्जनशक्तिर्यस्य स इति 'महाभूतादिवृत्तौजाः' इति श्लिष्टपाठे व्याख्यानम् ।

इत्यत्र वृत्तिरप्रतिघात इति व्याख्यातं जयादित्येन। वृत्तमप्रतिहतमोजः सृष्टिसामर्थ्यं यस्य स तथा। तमोनुदः प्रकृतिप्रेरकः। तदुक्तं भगवद्गीतायाम् (९।१०)—'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति। प्रादुरासीत्प्रकाशितो बभूव। तमोनुदः प्रलयावस्थाध्वंसक इति तु मेधातिथि–गोविन्दराजौ ॥ ६ ॥

**योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः।**
**सर्वभूतमयोऽचिन्त्यः स एव स्वयमुद्बभौ ॥ ७ ॥**

**योऽसाविति** ॥ योऽसाविति सर्वनामद्वयेन सकललोकवेदपुराणेतिहासादिप्रसिद्धं परमात्मानं निर्दिशति। अतीन्द्रियग्राह्यः इन्द्रियमतीत्य वर्तत इत्यतीन्द्रियं मनस्तद्ग्राह्य इत्यर्थः। यदाह व्यासः—'नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः। मनसा तु प्रयत्नेन[1] गृह्यते सूक्ष्मदर्शिभिः॥' सूक्ष्मो बहिरिन्द्रियागोचरः। अव्यक्तो व्यक्तिरवयवस्तद्रहितः। सनातनो नित्यः। सर्वभूतमयः सर्वभूतात्मा। अत एवाचिन्त्यः इयत्तया परिच्छेत्तुमशक्यः। स एव स्वयं उद्बभौ महदादिकार्यरूपतया प्रादुर्बभूव। उत्पूर्वो भातिः प्रादुर्भावे वर्तते। धातूनामनेकार्थत्वात् ॥ ७ ॥

**सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।**
**अप एव ससर्जादौ तासु बीजमवासृजत् ॥ ८ ॥**

**सोऽभिध्यायेति** ॥ स परमात्मा नानाविधाः प्रजाः सिसृक्षुरभिध्याय 'आपो जायन्ताम्' इत्यभिध्यानमात्रेणाप एव ससर्ज। अभिध्यानपूर्विकां सृष्टिं वदतो मनोः प्रकृतिरेवाचेतनाऽस्वतन्त्रा परिणमत इत्ययं पक्षो न संमतः, किंतु ब्रह्मैवाव्याकृतशक्त्यात्मना जगत्कारणमिति त्रिदण्डिवेदान्तसिद्धान्त एवाभिमतः प्रतिभाति। तथा च छान्दोग्योपनिषत् (६।२।३)—'तदैक्षत बहु स्यां प्रजायेय' इति। अत एव शारीरकसूत्रकृता व्यासेन सिद्धान्तितम्–'ईक्षतेर्नाशब्दम्' (ब्र. सू. १।१।५) इति। ईक्षतेरीक्षणश्रवणान्न प्रधानं जगत्कारणम्। अशब्दं न विद्यते शब्दः श्रुतिर्यस्य तदशब्दमिति सूत्रार्थः। स्वाच्छरीरादव्याकृतरूपादव्याकृतमेव भगवद्भास्करीयवेदान्तदर्शने प्रकृतिः, तदेव तस्य च शरीरं, अव्याकृतशब्देन पञ्चभूतबुद्धीन्द्रियकर्मेन्द्रियप्राणमनःकर्माविद्यावासना एव सूक्ष्मरूपतया शक्त्यात्मना स्थिता अभिधीयन्ते। अव्याकृतस्य च ब्रह्मणा सह भेदाभेदस्वीकाराद्ब्रह्माद्वैतं, शक्त्यात्मना च ब्रह्म जगद्रूपतया परिणमत इत्युभयमप्युपपद्यते। आदौ स्वकार्यभूतब्रह्माण्डसृष्टेः प्राक्। अपां सृष्टिश्चेयं महदहंकारतन्मात्रक्रमेण बोद्धव्या। 'महाभूतादि व्यञ्जयन्' (१।६) इति

पाठा०—1 प्रसन्नेन (=रागादिदोषैरविलिप्तेन).

पूर्वाभिधानादनन्तरमपि महदादिसृष्टेर्वक्ष्यमाणत्वात् । तास्वप्सु बीजं शक्तिरूपं आरोपितवान् ॥ ८ ॥

तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ ९ ॥

तदण्डमभवद्धैममिति ॥ तद्बीजं परमेश्वरेच्छया हैममण्डमभवत् । हैममिव हैमं शुद्धिगुणयोगान्न तु हैममेव । तदीयैकशकलेन भूमिनिर्माणस्य वक्ष्यमाणत्वात् । भूमेश्चाहैमत्वस्य प्रत्यक्षत्वादुपचाराश्रयणम् । सहस्रांशुरादित्यस्तत्तुल्यप्रभम् । तस्मिन्नण्डे हिरण्यगर्भो जातवान् । येन पूर्वजन्मनि हिरण्यगर्भोऽहमस्मीति भेदाभेदभावनया परमेश्वरोपासना कृता तदीयं लिङ्गशरीरावच्छिन्नजीवमनुप्रविश्य स्वयं परमात्मैव हिरण्यगर्भरूपतया प्रादुर्भूतः । सर्वलोकानां पितामहो जनकः । सर्वलोकपितामह इति वा तस्य नाम ॥ ९ ॥

इदानीमागमप्रसिद्धनारायणशब्दार्थनिर्वचनेनोक्तमेवार्थं द्रढयति—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥ १० ॥

आपो नारा इत्यादि ॥ आपो नाराशब्देनोच्यन्ते । अप्सु नाराशब्दस्याप्रसिद्धेस्तदर्थमाह–यतस्ता नराख्यस्य परमात्मनः सूनवोऽपत्यानि । 'तस्येदम्' (पा.४।३।१२०) इत्यण्प्रत्ययः । यद्यपि अणि कृते ङीप्प्रत्ययः प्राप्तस्तथापि छान्दसलक्षणैरपि स्मृतिषु व्यवहारात् 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' ( परि. २६ ) इति पाक्षिको ङीप्प्रत्ययस्तस्याभावपक्षे सामान्यलक्षणप्राप्ते टापि कृते नारा इति रूपसिद्धिः । आपोऽस्य परमात्मनो ब्रह्मरूपेणावस्थितस्य पूर्वमयनमाश्रय इत्यसौ नारायण इत्यागमेष्वाम्नातः। गोविन्दराजेन तु 'आपो नराः' इति पठितं व्याख्यातं च–नारायण इति प्राप्ते 'अन्येषामपि दृश्यते' (पा.६।३।१३७) इति दीर्घत्वेन नारायण इति रूपमिति। अन्ये तु–'आपो नाराः' इति पठन्ति ॥१०॥

यत्तत्कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥ ११ ॥

यत्तत्कारणमव्यक्तमिति ॥ यत्तदिति सर्वनामभ्यां लोकवेदादिसर्वप्रसिद्धं परमात्मानं निर्दिशति । कारणं सर्वोत्पत्तिमतां । अव्यक्तं बहिरिन्द्रियागोचरं । नित्यं उत्पत्तिविनाशरहितम् । वेदान्तसिद्धत्वात्सत्स्वभावम् प्रत्यक्षाद्यगोचरत्वादसत्स्वभावमिव । अथवा सद्भावजातं असदभावस्तयोरात्मभूतम् । तथा च श्रुतिः (छान्दो.६।८।७)—'ऐतदात्म्यमिदं सर्वम्' इति । तद्विसृष्टस्तेनोत्पादितः स पुरुषः सर्वत्र ब्रह्मेति कीर्त्यते ॥ ११ ॥

पाठा०—1 'आपो नराः' इति मेधातिथिः.

तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ।
स्वयमेवात्मनो ध्यानात्तदण्डमकरोद्द्विधा ॥ १२ ॥

तस्मिन्नण्डे स भगवानित्यादि ॥ तस्मिन् पूर्वोक्तेऽण्डे स ब्रह्मा वक्ष्यमाण-ब्रह्ममानेन संवत्सरमुषित्वा स्थित्वा 'आत्मनैवाण्डं द्विधा भवतु' इत्यात्मगत-ध्यानमात्रेण तदण्डं द्विखण्डं कृतवान् ॥ १२ ॥

ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ।
मध्ये व्योम दिशश्चाष्टावपां स्थानं च शाश्वतम् ॥ १३ ॥

ताभ्यां स शकलाभ्यां चेत्यादि ॥ शकलं खण्डं ताभ्यामण्डशकलाभ्यां उत्तरेण दिवं स्वर्लोकमधरेण भूर्लोकं उभयोर्मध्ये आकाशं दिशश्चान्तराल-दिग्भिः सहाष्टौ समुद्राख्यं अपां स्थानं स्थिरं निर्मितवान् ॥ १३ ॥

इदानीं महदादिक्रमेणैव जगन्निर्माणमिति दर्शयितुं तत्तत्सृष्टिमाह—

उद्बबर्हात्मनश्चैव मनः सदसदात्मकम् ।
मनसश्चाप्यहंकारमभिमन्तारमीश्वरम् ॥ १४ ॥

उद्बबर्हात्मनश्चैवेत्यादि ॥ ब्रह्मा आत्मनः परमात्मनः सकाशात्तेन रूपेण मन उद्धृतवान् । परमात्मन एव ब्रह्मस्वरूपेणोत्पन्नत्वात्परमात्मन एव च मनःसृष्टिर्वेदान्तदर्शने, न प्रधानात् । तथा च श्रुतिः (मुण्ड. २।१।३)—'एतस्मा-ज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' मनश्च श्रुतिसिद्धत्वाद्युगपज्ज्ञानानुत्पत्तिलिङ्गाच्च सत् अप्रत्यक्षत्वा-दसदिति मनसः पूर्वमहंकारतत्त्वं अहमित्यभिमानाख्यकार्ययुक्तं ईश्वरं स्वकार्य-करणक्षमम् ॥ १४ ॥

महान्तमेव चात्मानं सर्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतॄणि शनैः पञ्चेन्द्रियाणि च ॥ १५ ॥

महान्तमेव चात्मानमित्यादि ॥ महान्तमिति महदाख्यतत्त्वमहंकारात्पूर्वं परमात्मन एवाव्याकृतशक्तिरूपप्रकृतिसहितादुद्धृतवान् । आत्मन उत्पन्नत्वात् आत्मानमात्मोपकारकत्वाद्वा यान्यभिहितानि अभिधास्यन्ते च तान्युत्पत्ति-मन्ति सर्वाणि सत्त्वरजस्तमोगुणयुक्तानि विषयाणां शब्दस्पर्शरूपरसगन्धानां ग्राहकाणि शनैः क्रमेण वेदान्तसिद्धेन श्रोत्रादीनि द्वितीयाध्यायवक्ष्याणि पञ्च बुद्धीन्द्रियाणि, चशब्दात् पञ्च पाय्वादीनि कर्मेन्द्रियाणि, शब्दतन्मात्रादीनि च पञ्चोत्पादितवान् । नन्वभिध्यानपूर्वकसृष्ट्यभिधानाद्वेदान्तसिद्धान्त एव मनोरभिमत इति प्रागुक्तं तन्न संगच्छते । इदानीं महदादिक्रमेण सृष्ट्यभि-धानाद्वेदान्तदर्शनेन च परमात्मन एवाकाशादिक्रमेण सृष्टिरुक्ता । तथा च

तैत्तिरीयोपनिषत् ( २।१।१ )—'तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी' इति । उच्यते—प्रकृतितो महदादिक्रमेण सृष्टिरिति भगवद्भास्करीयदर्शनेऽभ्युपपद्यत इति तद्विदो व्याचक्षते । अव्याकृतमेव प्रकृतिरिष्यते, तस्य च सृष्ट्युन्मुखत्वं सृष्ट्याद्यकालयोगरूपं तदेव महत्तत्त्वं, ततो 'बहु स्याम्' इत्यभिमानात्मकेक्षणकालयोगित्वमव्याकृतस्याहंकारतत्त्वम् । तत आकाशादिपञ्चभूतसूक्ष्माणि क्रमेणोत्पन्नानि पञ्च तन्मात्राणि; ततस्तेभ्य एव स्थूलान्युत्पन्नानि पञ्च महाभूतानि सूक्ष्मस्थूलक्रमेणैव कार्योदयदर्शनादिति न विरोधः । अव्याकृतगुणत्वेऽपि सत्त्वरजस्तमसां सर्वाणि त्रिगुणानीत्युपपद्यते । भवतु वा सत्त्वरजस्तमःसमतारूपैव मूलप्रकृतिः, भवन्तु च तत्त्वान्तराण्येव महदहंकारतन्मात्राणि, तथापि प्रकृतिर्ब्रह्मणोऽनन्येति मनोः स्वरसः । यतो वक्ष्यति ( १२।९१ )—'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि' इति । तथा ( १२।१२५ )–'एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना । स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम्' इति ॥१५॥

तेषां त्ववयवान्सूक्ष्मान्षण्णामप्यमितौजसाम् ।
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ॥ १६ ॥

तेषां त्ववयवान्सूक्ष्मानित्यादि ॥ तेषां षण्णां पूर्वोक्ताहंकारस्य तन्मात्राणां च ये सूक्ष्मा अवयवास्तान् आत्ममात्रासु षण्णां स्वविकारेषु योजयित्वा मनुष्यतिर्यक्स्थावरादीनि सर्वभूतानि परमात्मा निर्मितवान् । तत्र तन्मात्राणां विकारः पञ्चमहाभूतानि अहंकारस्येन्द्रियाणि पृथिव्यादिभूतेषु शरीररूपतया परिणतेषु तन्मात्राहंकारयोजनां कृत्वा सकलस्य कार्यजातस्य निर्माणम् । अत एवामितौजसामनन्तकार्यनिर्माणेनातिवीर्यशालिनाम् ॥ १६ ॥

यन्मूर्त्यवयवाः सूक्ष्मास्तस्येमान्याश्रयन्ति षट् ।
तस्माच्छरीरमित्याहुस्तस्य मूर्तिं मनीषिणः ॥ १७ ॥

यन्मूर्त्यवयवाः सूक्ष्मा इत्यादि ॥ यस्मान्मूर्तेः शरीरं तत्संपादका अवयवाः सूक्ष्मास्तन्मात्राहंकाररूपाः षट् तस्य ब्रह्मणः सप्रकृतिकस्य इमानि वक्ष्यमाणानि भूतानीन्द्रियाणि च पूर्वोक्तानि कार्यत्वेनाश्रयन्ति, तन्मात्रेभ्यो भूतोत्पत्तेः अहंकाराच्च इन्द्रियोत्पत्तेः । तथा च पठन्ति (सां. का. २२)—'प्रकृतेर्महांस्ततोऽहंकारस्तस्माद्गणश्च षोडशकः । तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥' तस्मात्तस्य ब्रह्मणो या मूर्तिः स्वभावस्तां तथा परिणतामिन्द्रियादिशालिनीं लोकाः शरीरमिति वदन्ति । षडाश्रयणाच्छरीरमिति शरीरनिर्वचनेनानेन पूर्वोक्तोत्पत्तिक्रम एव दृढीकृतः ॥ १७ ॥

---

पाठा०—1 स्तानीमान्याश्रयन्ति.

तदाविशन्ति भूतानि महान्ति सह कर्मभिः ।
मनश्चावयवैः सूक्ष्मैः सर्वभूतकृदव्ययम् ॥ १८ ॥

तदाविशन्ति भूतानीत्यादि ॥ पूर्वश्लोके तस्येति प्रकृतं ब्रह्मात्र तदिति परामृश्यते। तद्ब्रह्म शब्दादिपञ्चतन्मात्रात्मनाऽवस्थितं महाभूतान्याकाशादीनि आविशन्ति तेभ्य उत्पद्यन्ते। सह कर्मभिः स्वकार्यैः, तत्राकाशस्यावकाशदानं कर्म, वायोर्व्यूहनं विन्यासरूपं, तेजसः पाकोऽपां संग्रहणं, पिण्डीकरणरूपं पृथिव्या धारणम्। अहंकारात्मनावस्थितं ब्रह्म मन आविशति। अहंकारादुत्पद्यत इत्यर्थः। अवयवैः स्वकार्यैः शुभाशुभसंकल्पसुखदुःखादिरूपैः सूक्ष्मैः बहिरिन्द्रियागोचरैः सर्वभूतकृत्सर्वोत्पत्तिनिमित्तं मनोजन्यशुभाशुभकर्मप्रभवत्वाज्जगतः। अव्ययमविनाशि ॥ १८ ॥

तेषामिदं तु सप्तानां पुरुषाणां महौजसाम् ।
सूक्ष्माभ्यो मूर्तिमात्राभ्यः संभवत्यव्ययाद्व्ययम् ॥ १९ ॥

तेषामिदं तु सप्तानामित्यादि ॥ तेषां पूर्वप्रकृतानां महदहंकारतन्मात्राणां सप्तसंख्यानां पुरुषादात्मन उत्पन्नत्वात्तद्वृत्तिग्राह्यत्वाच्च पुरुषाणां महौजसां स्वकार्यसंपादनेन वीर्यवतां सूक्ष्मा या मूर्तिमात्राः शरीरसंपादकभागास्ताभ्य इदं जगन्नश्वरं संभवति, अनश्वराद्यत्कार्यं तद्विनाशि स्वकारणे लीयते। कारणं तु कार्यापेक्षया स्थिरम्। परमकारणं तु ब्रह्म नित्यमुपासनीयमित्येतद्दर्शयितुमयमनुवादः ॥ १९ ॥

आद्याद्यस्य गुणं त्वेषामवाप्नोति परः परः ।
यो यो यावतिथश्चैषां स स तावद्गुणः स्मृतः ॥ २० ॥

आद्याद्यस्य गुणं त्वेषामित्यादि ॥ एषामिति पूर्वतरश्लोके (१।१८) 'तदाविशन्ति भूतानि' इत्यत्र भूतानां परामर्शः। तेषां चाकाशादिक्रमेणोत्पत्तिक्रमः, शब्दादिगुणवत्ता च वक्ष्यते। तत्राद्याद्यस्याकाशादेर्गुणं शब्दादिकं वाय्वादिः परः परः प्राप्नोति। एतदेव स्पष्टयति—यो य इति। एषां मध्ये यो यो यावतां पूरणो यावतिथः 'वतोरिथुक्' (पा.५।२।५३), स स द्वितीयादिः द्वितीयो द्विगुणः तृतीयस्त्रिगुण इत्येवमादिर्मन्वादिभिः स्मृतः। एतेनैतदुक्तं भवति—आकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, अपां शब्दस्पर्शरूपरसाः, भूमेः शब्दस्पर्शरूपरसगन्धाः। अत्र यद्यपि 'नित्यवीप्सयोः' (पा.८।१।४) इति द्विर्वचनेनाद्यस्याद्यस्येति प्राप्तं तथापि स्मृतीनां छन्दःसमानविषयत्वात् 'सुपां सुलुक्' (पा.७।१।३९) इति प्रथमाद्यस्य सुब्लुक् तेनाद्याद्यस्येति रूपसिद्धिः ॥ २० ॥

सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक् ।
वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ २१ ॥

सर्वेषां तु स नामानीत्यादि ॥ स परमात्मा हिरण्यगर्भरूपेणावस्थितः सर्वेषां नामानि गोजातेर्गौरिति, अश्वजातेरश्व इति; कर्माणि ब्राह्मणस्याध्ययनादीनि, क्षत्रियस्य प्रजारक्षादीनि, पृथक् पृथक् यस्य पूर्वकल्पे यान्यभूवन् आदौ सृष्ट्यादौ वेदशब्देभ्य एवावगम्य निर्मितवान् । भगवता व्यासेनापि वेदमीमांसायां वेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता । तथा च शारीरकसूत्रम् (ब्र.सू.१।३।२८)-'शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्' । अस्यार्थः-देवतानां विग्रहवत्त्वे वैदिके वस्वादिशब्दे देवतावाचिनि विरोधः स्याद्वेदस्यादिमत्त्वप्रसङ्गादिति चेन्नास्ति विरोधः । कस्मात्? अतःशब्दादेव, जगतः प्रभवादुत्पत्तेः प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थितः, स इह कल्पादौ हिरण्यगर्भस्य परमात्मन एव प्रथमदेहिमूर्तेर्मनस्यवस्थान्तरमनापन्नः सुप्तप्रबुद्धस्येव प्रादुर्भवति । तेन प्रदीपस्थानीयेन सुरनरतिर्यगादिप्रविभक्तं जगदभिधेयभूतं निर्मिमीते । कथमिदं गम्यते? प्रत्यक्षानुमानाभ्याम्, श्रुतिस्मृतिभ्यामित्यर्थः । प्रत्यक्षं श्रुतिरनपेक्षत्वात् । अनुमानं स्मृतिरनुमीयमानश्रुतिसापेक्षत्वात् । तथा च श्रुतिः-'एत इति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभि सौभगेत्यन्याः प्रजाः' । स्मृतिस्तु ( १।२१ )-'सर्वेषां तु स नामानि' इत्यादिका मन्वादिप्रणीतैव । पृथक्संस्थाश्चेति । लौकिकीश्च व्यवस्थाः कुलालस्य घटनिर्माणं, कुविन्दस्य पटनिर्माणमित्यादिकविभागेन निर्मितवान् ॥ २१ ॥

कर्मात्मनां च देवानां सोऽसृजत्प्राणिनां प्रभुः ।
साध्यानां च गणं सूक्ष्मं यज्ञं चैव सनातनम् ॥ २२ ॥

कर्मात्मनां च देवानामित्यादि ॥ स ब्रह्मा देवानां गणमसृजत् । प्राणिनामिन्द्रादीनां[1] कर्माणि आत्मा स्वभावो येषां तेषामप्राणिनां च ग्रावादीनां[2] देवानां साध्यानां च देवविशेषाणां समूहं यज्ञं च ज्योतिष्टोमादिकं कल्पान्तरेऽप्यनुमीयमानत्वान्नित्यम् । साध्यानां च गणस्य पृथग्वचनं सूक्ष्मत्वात् ॥ २२ ॥

अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिद्ध्यर्थमृग्यजुःसामलक्षणम् ॥ २३ ॥

अग्निवायुरविभ्यस्त्वित्यादि ॥ ब्रह्म ऋग्यजुःसामसंज्ञं वेदत्रयं अग्निवायुरविभ्य आकृष्टवान् । सनातनं नित्यं । वेदापौरुषेयत्वपक्ष एव मनोरभिमतः ।

---

१ इन्द्र-विष्णु-रुद्रादयस्तु देवताः स्वरूपतो महाभारतादिषु सुश्रुताः. २ ग्रावादयस्तु-'प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः' (ऋ.सं.८।४।२९) इत्यादिषु विगीताः.

पूर्वकल्पे ये वेदास्त एव परमात्ममूर्तेर्ब्रह्मणः सर्वज्ञस्य स्मृत्यारूढाः, तानेव कल्पादौ अग्निवायुरविभ्य आचकर्ष । श्रौतश्चायमर्थो न शङ्कनीयः । तथा च श्रुतिः-'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः' इति । आकर्षणार्थत्वाद्दुहिधातोर्नाग्निवायुरवीणामकथितकर्मता किंत्वपादानतैव । यज्ञसिद्ध्यर्थं त्रयीसंपाद्यत्वाद्यज्ञानां आपीनस्थक्षीरवद्विद्यमानानामेव वेदाना मभिव्यक्तिप्रदर्शनार्थं आकर्षणवाचको गौणो दुहिः प्रयुक्तः ॥ २३ ॥

कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।
सरितः सागराञ्छैलान्समानि विषमाणि च ॥ २४ ॥

कालं कालविभक्तीश्चेत्यादि ॥ अत्र 'ससर्ज'इत्युत्तरश्लोकवर्तिनी क्रिया संबध्यते । आदित्यादिक्रियाप्रचयरूपं कालं, कालविभक्तीर्मासर्त्वयनाद्याः, नक्षत्राणि कृत्तिकादीनि, ग्रहान्सूर्यादीन्, सरितो नदीः, सागरान्समुद्रान्, शैलान्पर्वतान्, समानि समस्थानानि, विषमाणि उच्चनीचरूपाणि ॥ २४ ॥

तपो वाचं रतिं चैव कामं च क्रोधमेव च ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥ २५ ॥

तपो वाचमित्यादि ॥ तपः प्राजापत्यादि वाचं वाणीं रतिं चेतःपरितोषं काममिच्छां क्रोधं चेतोविकारं इमां एतच्छ्लोकोक्तां पूर्वश्लोकोक्तां च सृष्टिं चकार । सृज्यत इति सृष्टिः । कर्मणि क्तिन् । इमाः प्रजा वक्ष्यमाणा देवादिकाः कर्तुमिच्छन् ॥ २५ ॥

कर्मणां च विवेकार्थं धर्माधर्मौ व्यवेचयत् ।
द्वन्द्वैरयोजयच्चेमाः सुखदुःखादिभिः प्रजाः ॥ २६ ॥

कर्मणां चेति ॥ धर्मो[१] यज्ञादिः, स च कर्तव्यः; अधर्मो ब्रह्मवधादिः, स न कर्तव्यः; इति कर्मणां विभागाय धर्माधर्मौ व्यवेचयत् पृथक्त्वेनाभ्यधात् । धर्मस्य फलं सुखं, अधर्मस्य फलं दुःखम् । धर्माधर्मफलभूतैर्द्वन्द्वैः परस्परविरुद्धैः सुखदुःखादिभिरिमाः प्रजा योजितवान् । आदिग्रहणात् कामक्रोधरागद्वेषक्षुत्पिपासाशोकमोहादिभिः ॥ २६ ॥

अण्व्यो मात्रा विनाशिन्यो दशार्धानां तु याः स्मृताः ।
ताभिः सार्धमिदं सर्वं संभवत्यनुपूर्वशः ॥ २७ ॥

अण्व्यो मात्रा इति ॥ दशार्धानां पञ्चानां महाभूतानां याः सूक्ष्माः पञ्च-

पाठा०—1 कर्मणां तु विवेकाय.

१ 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' ( वै. १।१।२ ); शरीरेण प्रशस्तदानपरित्राणादिकर्माचरणं, वाचा हितसत्यादिसंलापनं, मनसाऽजिघांसादिकम्, एवं पुण्यरूपा प्रवृत्तिर्धर्मः; 'अर्थत्वे सति चोदनागम्यो धर्मः' (जै.सू.१।१।१) इति धर्मलक्षणानि.

तन्मात्ररूपा विनाशिन्यः पञ्चमहाभूतरूपतया विपरिणामिन्यः ताभिः सह उक्तं वक्ष्यमाणं चेदं सर्वमुत्पद्यते । अनुपूर्वशः क्रमेण । सूक्ष्मात्स्थूलं स्थूलात्स्थूलतरमित्यनेन सर्वशक्तेर्ब्रह्मणो मानससृष्टिः कदाचित्तत्त्वनिरपेक्षा स्यादितीमां शङ्कामपनिनीषंस्तद्द्वारेणैवेयं सृष्टिरिति मध्ये पुनः पूर्वोक्तं स्मारितवान् ॥२७॥

यं तु कर्मणि यस्मिन्स न्ययुङ्क्त प्रथमं प्रभुः ।
स तदेव स्वयं भेजे सृज्यमानः पुनः पुनः ॥ २८ ॥

यं तु कर्मणीति ॥ स प्रजापतिर्यं जातिविशेषं व्याघ्रादिकं यस्यां क्रियायां हरिणमारणादिकायां सृष्ट्यादौ नियुक्तवान् स जातिविशेषः पुनःपुनरपि सृज्यमानः स्वकर्मवशेन तदेवाचरितवान् । एतेन प्राणिकर्मसापेक्षं प्रजापतेरुत्तमाधमजातिनिर्माणं न रागद्वेषाधीनमिति दर्शितम् । अत एव वक्ष्यति (१।४१) 'यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम्' इति ॥ २८ ॥

एतदेव प्रपञ्चयति—

हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ।
यद्यस्य सोऽदधात्सर्गे तत्तस्य स्वयमाविशत् ॥ २९ ॥

हिंस्राहिंस्रे इत्यादि ॥ हिंस्रं कर्म सिंहादेः करिमारणादिकम् । अहिंस्रं हरिणादेः । मृदु दयाप्रधानं विप्रादेः । क्रूरं क्षत्रियादेः । धर्मो यथा ब्रह्मचार्यादेः गुरुशुश्रूषादिः । अधर्मो यथा तस्यैव मांसमैथुनसेवनादिः । ऋतं सत्यं, तच्च प्रायेण देवानाम् । अनृतमसत्यं, तदपि प्रायेण मनुष्याणाम् । तथा च श्रुतिः–'सत्यवाचो देवा अनृतवाचो मनुष्याः' इति । तेषां मध्ये यत्कर्म स प्रजापतिः सर्गादौ यस्याधारयत् सृष्ट्युत्तरकालमपि स तदेव कर्म प्राक्तनादृष्टवशात्स्वयमेव भेजे ॥ २९ ॥

अत्र दृष्टान्तमाह—

यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥ ३० ॥

यथर्त्विति ॥ यथा वसन्तादिऋतव ऋतुचिह्नानि चूतमञ्जर्यादीनि ऋतुपर्यये स्वकार्यावसरे स्वयमेवाप्नुवन्ति तथा देहिनोऽपि हिंस्रादीनि कर्माणि ॥ ३० ॥

लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥ ३१ ॥

लोकानां त्विति ॥ भूरादीनां लोकानां बाहुल्यार्थं मुखबाहूरुपादेभ्यो ब्राह्मणक्षत्रियवैश्यशूद्रान्यथाक्रमं निर्मितवान् । ब्राह्मणादिभिः सायंप्रातरग्न-

त्वाहुतिः प्रक्षिप्ता सूर्यमुपतिष्ठते सूर्याद्वृष्टिर्वृष्टेरन्नमन्नात्प्रजाबाहुल्यम् । वक्ष्यति च–'अग्नौ प्रास्ताहुतिः सम्यगादित्यम्–' (३।७६) इत्यादि । दैव्या च शक्त्या मुखादिभ्यो ब्राह्मणादिनिर्माणम् । ब्राह्मणो न विशङ्कनीयः श्रुतिसिद्धत्वात् । तथा च श्रुतिः 'ब्राह्मणोऽस्य मुखमासीत्' (ऋ.सं.८।४।१९) इत्यादिः ॥ ३१ ॥

**द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ।**
**अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः ॥ ३२ ॥**

द्विधा कृत्वेति ॥ स ब्रह्मा निजदेहं द्विखण्डं कृत्वा अर्धेन स्त्री तस्यां मैथुनधर्मेण विराट्संज्ञं पुरुषं निर्मितवान् । श्रुतिश्च (ऋ.सं. ८।४।१७)–'ततो विराडजायत' इति ॥ ३२ ॥

**तपस्तप्त्वासृजद्यं तु स स्वयं पुरुषो विराट् ।**
**तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ॥ ३३ ॥**

तपस्तप्त्वेति ॥ स विराट् तपो विधाय यं निर्मितवान् तं मां मनुं जानीत अस्य सर्वस्य जगतः स्रष्टारम् । भो द्विजसत्तमाः । एतेन स्वजन्मोत्कर्षसामर्थ्यातिशयावभिहितवान् लोकानां प्रत्ययितप्रत्ययार्थम् ॥ ३३ ॥

**अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ।**
**पतीन्प्रजानामसृजं महर्षीनादितो दश ॥ ३४ ॥**

अहमिति ॥ अहं प्रजाः स्रष्टुमिच्छन् सुदुश्चरं तपस्तप्त्वा दश प्रजापतीन् प्रथमं सृष्टवान् । तैरपि प्रजानां सृज्यमानत्वात् ॥ ३४ ॥

**मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।**
**प्रचेतसं वसिष्ठं च भृगुं नारदमेव च ॥ ३५ ॥**

मरीचिमित्यादि ॥ त एते दश प्रजापतयो नामतो निर्दिष्टाः ॥ ३५ ॥

**एते मनूंस्तु सप्तान्यानसृजन्भूरितेजसः ।**
**देवान्देवनिकायांश्च महर्षींश्चामितौजसः ॥ ३६ ॥**

एते मनूंस्त्विति ॥ एते मरीच्यादयो दश भूरितेजसो बहुतेजसोऽन्यान् सप्तपरिमिततेजस्कान् मनून्देवान् ब्रह्मणाऽसृष्टान् देवनिवासस्थानानि स्वर्गादीन्महर्षींश्च सृष्टवन्तः। 'मनु'शब्दोऽयमधिकारवाची । चतुर्दशसु मन्वन्तरेषु यस्य यत्र सर्गाद्यधिकारः स तस्मिन्मन्वन्तरे स्वायंभुवस्वारोचिषादिनामभिर्मनुरिति व्यपदिश्यते ॥ ३६ ॥

---

१ यत्त्वेतदग्रे मनुरेव वक्ष्यति—(९।३१७) 'अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्' इति; ब्राह्मणलक्षणं चोक्तं वसिष्ठेन–'योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम् । विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ॥' इति ।

यक्षरक्षःपिशाचांश्च गन्धर्वाप्सरसोऽसुरान् ।
नागान्सर्पान्सुपर्णांश्च पितॄणां च पृथग्गणान् ॥ ३७ ॥

यक्षरक्ष इति ॥ 'एतेऽसृजन्' इति पूर्वस्यैवात्रानुषङ्गः उत्तरत्र श्लोकद्वये च । यक्षो वैश्रवणस्तदनुचराश्च । रक्षांसि रावणादीनि । पिशाचास्तेभ्योऽपकृष्टा अशुचिमरुदेशनिवासिनः । गन्धर्वाश्चित्ररथादयः । अप्सरस उर्वश्याद्याः । असुरा विरोचनादयः । नागा वासुक्यादयः । सर्पास्ततोऽपकृष्टा अलगर्दादयः । सुपर्णा गरुडादयः । पितॄणामाज्यपादीनां[1] गणः समूहः । एषां च भेद इतिहासादिप्रसिद्धो नाध्यक्षादिगोचरः ॥ ३७ ॥

विद्युतोऽशनिमेघांश्च रोहितेन्द्रधनूंषि च ।
उल्कानिर्घातकेतूंश्च ज्योतींष्युच्चावचानि च ॥ ३८ ॥

विद्युत इति ॥ मेघेषु दृश्यं दीर्घाकारं ज्योतिर्विद्युत् । मेघादेव यज्ज्योतिर्वृक्षादिविनाशकं तदशनिः । मेघाः प्रसिद्धाः । रोहितं दण्डाकारम् । नानावर्णं दिवि दृश्यते यज्ज्योतिस्तदेव वक्रमिन्द्रधनुः । उल्का रेखाकारमन्तरिक्षात्पतज्ज्योतिः । निर्घातो भूम्यन्तरिक्षगत उत्पातध्वनिः । केतवः शिखावन्ति ज्योतींषि उत्पातरूपाणि । अन्यानि ज्योतींषि ध्रुवागस्त्यादीनि नानाप्रकाराणि ॥ ३८ ॥

किन्नरान्वानरान्मत्स्यान्विविधांश्च विहङ्गमान् ।
पशून्मृगान्मनुष्यांश्च व्यालांश्चोभयतोदतः ॥ ३९ ॥

किन्नरानिति ॥ किन्नरा अश्वमुखा देवयोनयो नरविग्रहाः । वानराः प्रसिद्धाः । मत्स्या रोहितादयः । विहङ्गमाः पक्षिणः । पशवो गवाद्याः । मृगा हरिणाद्याः । व्यालाः सिंहाद्याः । उभयतोदतः द्वे दन्तपङ्क्ती येषां उत्तराधरे भवतः ॥ ३९ ॥

कृमिकीटपतङ्गांश्च यूकामक्षिकमत्कुणम् ।
सर्वं च दंशमशकं स्थावरं च पृथग्विधम् ॥ ४० ॥

कृमिकीटेति ॥ कीटाः कृमिभ्यः किंचित्स्थूलाः । पतङ्गाः शलभाः । यूकादयः प्रसिद्धाः । 'क्षुद्रजन्तवः' ( पा. २।४।८ ) इत्यनेन एकवद्भावः । स्थावरं वृक्षलतादिभेदेन विविधप्रकारम् ॥ ४० ॥

एवमेतैरिदं सर्वं मन्नियोगान्महात्मभिः ।
यथाकर्म तपोयोगात्सृष्टं स्थावरजङ्गमम् ॥ ४१ ॥

एवमेतैरिति ॥ एवमित्युक्तप्रकारेण एतैर्मरीच्यादिभिरिदं सर्वं स्थावरजङ्गमं सृष्टम् । यथाकर्म यस्य जन्तोर्यादृशं कर्म तदनुरूपम् । तस्य देवमनुष्यतिर्य-

---

[1] ते च पाञ्चधानिकविधाने वक्ष्यन्ते मनुनैव ( ३।१९७-९८ )-'सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम' इत्युपक्रम्य 'पुलस्त्यस्याज्यपाः पुत्राः' इत्यन्तेन ।

गादियोनिषूत्पादनं मन्नियोगान्मदाज्ञया । तपोयोगान्महत्तपः कृत्वा । सर्वमैश्वर्यं तपोधीनमिति दर्शितम् ॥ ४१ ॥

**येषां तु यादृशं कर्म भूतानामिह कीर्तितम् ।**
**तत्तथा वोऽभिधास्यामि क्रमयोगं च जन्मनि ॥ ४२ ॥**

येषामित्यादि ॥ येषां पुनर्यादृशं कर्म इह संसारे पूर्वाचार्यैः कथितम् । यथा–'ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः' (१।४६) । ब्राह्मणादीनां चाध्ययनादिकर्म तत्तथैव वो युष्माकं वक्ष्यामि । जन्मादिक्रमयोगं च ॥४२॥

**पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः ।**
**रक्षांसि च पिशाचाश्च मनुष्याश्च जरायुजाः ॥ ४३ ॥**

पशवश्चेति ॥ जरायुर्गर्भावरणचर्म, तत्र मनुष्यादयः प्रादुर्भवन्ति पश्चान्मुक्ता जायन्ते । एषामेव जन्मक्रमः प्रागुक्तो विवृतः । दन्तशब्दसमानार्थो दन्छब्दः प्रकृत्यन्तरमस्ति, तस्येदं प्रथमाबहुवचने रूपमुभयतोदत इति ॥४३॥

**अण्डजाः पक्षिणः सर्पा नक्रा मत्स्याश्च कच्छपाः ।**
**यानि चैवंप्रकाराणि स्थलजान्यौदकानि च ॥ ४४ ॥**

अण्डजाः पक्षिण इति ॥ अण्ड आदौ संभवन्ति ततो जायन्त इति एषां जन्मक्रमः । नक्राः कुम्भीराः । स्थलजानि कृकलासादीनि । औदकानि शङ्खादीनि ॥ ४४ ॥

**स्वेदजं दंशमशकं यूकामक्षिकमत्कुणम् ।**
**ऊष्मणश्चोपजायन्ते यच्चान्यत्किंचिदीदृशम् ॥ ४५ ॥**

स्वेदजमिति ॥ स्वेदः पार्थिवद्रव्याणां तापेन क्लेदः, ततो दंशमशकादि जायते । ऊष्मणश्च स्वेदहेतुतापादपि अन्यद्दंशादिसदृशं पुत्तिकापिपीलिकादि जायते ॥ ४५ ॥

**उद्भिज्जाः स्थावराः सर्वे बीजकाण्डप्ररोहिणः ।**
**ओषध्यः फलपाकान्ता बहुपुष्पफलोपगाः ॥ ४६ ॥**

उद्भिज्जा इति ॥ उद्भेदनमुद्भित् । भावे क्विप् । ततो जायन्ते ऊर्ध्वं बीजं भूमिं च भित्त्वेत्युद्भिज्जा वृक्षाः; ते च द्विधा—केचिद्बीजादेव जायन्ते, केचित्काण्डात् शाखा एव रोपिता वृक्षतां यान्ति । इदानीं येषां यादृशं कर्म तदुच्यते—ओषध्य इति ॥ ओषध्यो व्रीहियवादयः फलपाकेनैव नश्यन्ति बहुपुष्पफलयुक्ताश्च भवन्ति । 'ओषधि'शब्दादेव 'कृदिकारादक्तिनः' (ग. ५०) इति ङीपि दीर्घत्वे ओषध्य इति रूपम् ॥ ४६ ॥

---

१ एतच्च–'यथोल्बेनावृतो गर्भः' इत्यादिनोक्तं; ऐतरेयब्राह्मणेऽपि ( १।३ ) 'उल्बं वा एतद्दीक्षितस्य यद्वास उल्बेनैवेनं' इत्युपक्रम्य 'उल्बाज्जरायु जरायुणैवैनं तत्प्रोर्णुवन्ति' इत्यादिना बहिर्वेष्टनसाम्यनिरूपणे स्पष्टीकृतमस्ति ।

अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृताः ।
पुष्पिणः फलिनश्चैव वृक्षास्तूभयतः स्मृताः ॥ ४७ ॥

अपुष्पा इति ॥ नास्य श्लोकस्याभिधानकोशवत्संज्ञासंज्ञिसंबन्धपरत्वम्, अप्रकृतत्वात् किंतु 'क्रमयोगं च जन्मनि' (१।४२) इति प्रकृतं तदर्थमिदमुच्यते। ये वनस्पतयस्तेषां पुष्पमन्तरेणैव फलजन्म, इतरेभ्यस्तु पुष्पाणि जायन्ते तेभ्यः फलानीति। एवं वृक्षा उभयरूपाः। प्रथमान्तात्तसिः ॥ ४७ ॥

गुच्छगुल्मं तु विविधं तथैव तृणजातयः ।
बीजकाण्डरुहाण्येव प्रताना वल्ल्य एव च ॥ ४८ ॥

गुच्छगुल्मं त्विति ॥ मूलत एव यत्र लतासमूहो भवति, न च प्रकाण्डानि ते गुच्छा मल्लिकादयः। गुल्मा एकमूलाः संघातजाताः शरेक्षुप्रभृतयः। तृणजातय उलपाद्याः। प्रतानास्तन्तुयुक्तास्त्रपुषालाबूप्रभृतयः। वल्ल्यो गुडूच्यादयो या भूमेर्वृक्षमारोहन्ति। एतान्यपि बीजकाण्डरुहाणि। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा. १।२।६९) इति नपुंसकत्वम् ॥ ४८ ॥

तमसा बहुरूपेण वेष्टिताः कर्महेतुना ।
अन्तःसंज्ञा भवन्त्येते सुखदुःखसमन्विताः ॥ ४९ ॥

तमसेति ॥ एते वृक्षादयस्तमोगुणेन विचित्रदुःखफलेनाधर्मैकर्महेतुकेन व्याप्ता अन्तश्चैतन्या भवन्ति। यद्यपि सर्वे चान्तरेव चेतयन्ते तथापि बहिर्व्यापारादिकार्यविरहात्तथा व्यपदिश्यन्ते। त्रिगुणारब्धत्वेऽपि चैषां तमोगुणबाहुल्यात्तथा व्यपदेशः। अत एव सुखदुःखसमन्विताः। सत्त्वस्यापि भावात्कदाचित्सुखलेशोऽपि जलधरजनितजलसंपर्कादेषां जायते ॥ ४९ ॥

एतदन्तास्तु गतयो ब्रह्माद्याः समुदाहृताः ।
घोरेऽस्मिन्भूतसंसारे नित्यं सततयायिनि ॥ ५० ॥

एतदन्ता इति ॥ स्थावरपर्यन्ता[1] ब्रह्मोपक्रमा गतय उत्पत्तयः कथिताः। भूतानां क्षेत्रज्ञानां जन्ममरणप्रबन्धे दुःखबहुलतया भीषणे सदा विनश्वरे ५०

इत्थं सर्गमभिधाय प्रलयदशामाह—

एवं सर्वं स सृष्ट्वेदं मां चाचिन्त्यपराक्रमः ।
आत्मन्यन्तर्दधे भूयः कालं कालेन पीडयन् ॥ ५१ ॥

एवं सर्वमिति ॥ एवं उक्तप्रकारेण। इदं सर्वं स्थावरजङ्गमं जगत्स्रष्टा स प्रजापतिरचिन्त्यशक्तिरात्मनि शरीरत्यागरूपमन्तर्धानं कृतवान्। सृष्टिकालं प्रलयकालेन नाशयन्प्राणिनां कर्मवशेन पुनःपुनः सर्गप्रलयान्करोतीत्यर्थः ५१

---

१ स्थावराः पृथिव्यप्तेजोवायुवनस्पतयः, तत्पर्यन्ताः इति भावः.

अत्र हेतुमाह—

यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥ ५२ ॥

यदेति ॥ यदा स प्रजापतिर्जागर्ति सृष्टिस्थिती इच्छति तदेदं जगत् श्वासप्रश्वासाहारादिचेष्टां लभते । यदा स्वपिति निवृत्तेच्छो भवति शान्तात्मा उपसंहारमनाः तदेदं जगत्प्रलीयते ॥ ५२ ॥

पूर्वोक्तमेव स्पष्टयति—

तस्मिन्स्वपति सुस्थे तु कर्मात्मानः शरीरिणः ।
स्वकर्मभ्यो निवर्तन्ते मनश्च ग्लानिमृच्छति ॥ ५३ ॥

तस्मिन्स्वपतीति ॥ तस्मिन्प्रजापतौ निवृत्तेच्छे सुस्थे उपसंहृतदेहमनोव्यापारे कर्मलब्धदेहाः क्षेत्रज्ञाः स्वकर्मभ्यो देहग्रहणादिभ्यो निवर्तन्ते । मनः सर्वेन्द्रियसहितं वृत्तिरहितं भवति ॥ ५३ ॥

इदानीं महाप्रलयमाह—

युगपत्तु प्रलीयन्ते यदा तस्मिन्महात्मनि ।
तदायं सर्वभूतात्मा सुखं स्वपिति निर्वृतः ॥ ५४ ॥

युगपत्त्विति ॥ एकस्मिन्नेव काले यदा तस्मिन्परमात्मनि सर्वभूतानि प्रलयं यान्ति तदायं सर्वभूतानामात्मा निर्वृतः निवृत्तजाग्रत्स्वप्नव्यापारः सुखं स्वपिति सुषुप्त इव भवति । यद्यपि नित्यज्ञानानन्दस्वरूपे परमात्मनि न सुष्वापस्तथापि जीवधर्मोऽयमुपचर्यते ॥ ५४ ॥

इदानीं प्रलयप्रसङ्गेन जीवस्योत्क्रमणमपि श्लोकद्वयेनाह—

तमोऽयं तु समाश्रित्य चिरं तिष्ठति सेन्द्रियः ।
न च स्वं कुरुते कर्म तदोत्क्रामति मूर्तितः ॥ ५५ ॥

तमोऽयमिति ॥ अयं जीवस्तमो ज्ञाननिवृत्तिं प्राप्य बहुकालमिन्द्रियादिसहितस्तिष्ठति । न चात्मीयं कर्म श्वासप्रश्वासादिकं करोति तदा मूर्तितः पूर्वदेहादुत्क्रामति अन्यत्र गच्छति । लिङ्गशरीरावच्छिन्नस्य जीवस्य उद्गमात्तद्गमनमप्युपपद्यते । तथा चोक्तं बृहदारण्यके (४।४।२)—'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति, प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । प्राणा इन्द्रियाणि ॥ ५५ ॥

कदा देहान्तरं गृह्णातीत्यत आह—

यदाणुमात्रिको भूत्वा बीजं स्थास्नु चरिष्णु च ।
समाविशति संसृष्टस्तदा मूर्तिं विमुञ्चति ॥ ५६ ॥

यदाणुमात्रिक इति ॥ अणवो मात्राः पुर्यष्टकरूपा यस्य सोऽणुमात्रिकः ।

'पुर्यष्टक'शब्देन भूतादीन्यष्टावुच्यन्ते । तदुक्तं सनन्देन—'भूतेन्द्रियमनोबुद्धिवासनाकर्मवायवः । अविद्या चाष्टकं प्रोक्तं पुर्यष्टमृषिसत्तमैः ॥' ब्रह्मपुराणेऽप्युक्तम्—'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते । तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन तु ॥' यदाणुमात्रिको भूत्वा संपद्य स्थाणु वृक्षादिहेतुभूतं, चरिष्णु मानुषादिकारणं बीजं प्रविशत्यधितिष्ठति तदा संसृष्टः पुर्यष्टकयुक्तो मूर्तिं स्थूलदेहान्तरं कर्मानुरूपं विमुञ्चति गृह्णाति ॥ ५६ ॥

प्रासङ्गिकं जीवस्योत्क्रमणमभिधाय प्रकृतमुपसंहरति—

एवं स जाग्रत्स्वप्नाभ्यामिदं सर्वं चराचरम् ।
संजीवयति चाजस्रं प्रमापयति चाव्ययः ॥ ५७ ॥

एवं स जाग्रत्स्वप्नाभ्यामिति ॥ स ब्रह्मा अनेन प्रकारेण स्वीयजाग्रत्स्वप्नाभ्यामिदं स्थावरजङ्गमं संजीवयति मारयति च । अजस्रं सततम् । अव्ययः अविनाशी ॥ ५७ ॥

इदं शास्त्रं तु कृत्वासौ मामेव स्वयमादितः ।
विधिवद्ग्राहयामास मरीच्यादींस्त्वहं मुनीन् ॥ ५८ ॥

इदं शास्त्रमिति ॥ असौ ब्रह्मा इदं शास्त्रं कृत्वा सृष्ट्यादौ मामेव विधिवच्छास्त्रोक्ताङ्गजातानुष्ठानेनाध्यापितवान् । अहं तु मरीच्यादीनध्यापितवान् ॥ ननु ब्रह्मकृतत्वेऽस्य शास्त्रस्य कथं मानवव्यपदेशः ? अत्र मेधातिथिः—शास्त्रशब्देन शास्त्रार्थो विधिनिषेधसमूह उच्यते । तं ब्रह्मा मनुं ग्राहयामास । मनुस्तु तत्प्रतिपादकं ग्रन्थं कृतवानिति न विरोधः । अन्ये तु ब्रह्मकृतत्वेऽप्यस्य मनुना प्रथमं मरीच्यादिभ्यः स्वरूपतोऽर्थतश्च प्रकाशितत्वान्मानवव्यपदेशो वेदापौरुषेयत्वेऽपि काठकादिव्यपदेशवत् । इदं तूच्यते—ब्रह्मणा शतसाहस्रमिदं धर्मशास्त्रं कृत्वा मनुरध्यापित आसीत्, ततस्तेन च स्ववचनेन संक्षिप्य शिष्येभ्यः प्रतिपादितमित्यविरोधः । तथा च नारदः 'शतसाहस्रोऽयं ग्रन्थ' इति स्मरति स्म ॥ ५८ ॥

एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।
एतद्धि मत्तोऽधिजगे सर्वमेषोऽखिलं मुनिः ॥ ५९ ॥

एतद्वोऽयमित्यादि ॥ एतच्छास्त्रमयं भृगुः युष्माकमखिलं कथयिष्यति । यस्मादेषोऽशेषमेतन्मत्तोऽधीतवान् ॥ ५९ ॥

ततस्तथा स तेनोक्तो महर्षिर्मनुना भृगुः ।
तानब्रवीदृषीन्सर्वान् प्रीतात्मा श्रूयतामिति ॥ ६० ॥

ततस्तथेति ॥ स भृगुर्मनुना तथोक्तोऽयं श्रावयिष्यतीति, यस्मादेषोऽधि-

---

१ 'शतसाहस्रोऽयं ग्रन्थः प्रजापतिना कृतः, ततः स मन्वादिभिः क्रमेण संक्षिप्तः' इति नारदस्मृतिः ।

जग इत्युक्तस्ततोऽनन्तरमनेकमुनिसंनिधौ गुरुसंभावनया प्रीतमनास्तानृषीन् प्रत्युवाच–'श्रूयताम्' इति ॥ ६० ॥

**स्वायंभुवस्यास्य मनोः षड्वंश्या मनवोऽपरे ।**
**सृष्टवन्तः प्रजाः स्वाः स्वा महात्मानो महौजसः ॥६१॥**

स्वायंभुवस्येति ॥ ब्रह्मपुत्रस्यास्य मनोः षड्वंशप्रभवा अन्ये मनवः । एवं कार्यकारिणः स्वस्वकाले सृष्टिपालनादावधिकृताः स्वाः स्वाः प्रजा उत्पादितवन्तः ॥ ६१ ॥

**स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा ।**
**चाक्षुषश्च महातेजा विवस्वत्सुत एव च ॥ ६२ ॥**

स्वारोचिषश्चेति ॥ एते भेदेन मनवः षट् नामतो निर्दिष्टाः ॥ ६२ ॥

**स्वायंभुवाद्याः सप्तैते मनवो भूरितेजसः ।**
**स्वे स्वेऽन्तरे सर्वमिदमुत्पाद्यापुश्चराचरम् ॥ ६३ ॥**

स्वायंभुवेति ॥ स्वायंभुवमुखाः सप्तामी मनवः स्वीयस्वीयाधिकारकाले इदं स्थावरजङ्गममुत्पाद्य पालितवन्तः ॥ ६३ ॥

इदानीमुक्तमन्वन्तरसृष्टिप्रलयादिकालपरिमाणपरिज्ञानायाह—

**निमेषा दश चाष्टौ च काष्ठा, त्रिंशत्तु ताः कला ।**
**त्रिंशत्कला मुहूर्तः स्यादहोरात्रं तु तावतः ॥ ६४ ॥**

निमेषा दश चाष्टाविति ॥ अक्षिपक्ष्मणोः स्वाभाविकस्य उन्मेषस्य सहकारी निमेषः । तेऽष्टादश काष्ठा नाम कालः । त्रिंशच्च काष्ठाः कलासंज्ञकः । त्रिंशत्कलाः मुहूर्ताख्यः कालः । तावत्रिंशन्मुहूर्तान् अहोरात्रं कालं विद्यात् । तावत इति द्वितीयानिर्देशात् 'विद्यात्' इत्यध्याहारः ॥ ६४ ॥

**अहोरात्रे विभजते सूर्यो मानुषदैविके ।**
**रात्रिः स्वप्नाय भूतानां चेष्टायै कर्मणामहः ॥ ६५ ॥**

अहोरात्रे इति ॥ मानुषदैवसंबन्धिनौ दिनरात्रिकालावादित्यः पृथक्करोति । तयोर्मध्ये भूतानां स्वप्नार्थं रात्रिर्भवति, कर्मानुष्ठानार्थं च दिनम् ॥ ६५ ॥

**पित्र्ये रात्र्यहनी मासः, प्रविभागस्तु पक्षयोः ।**
**कर्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्वरी ॥ ६६ ॥**

पित्र्ये इति ॥ मानुषाणां मासः पितॄणामहोरात्रे भवतः । तत्र पक्षद्वयेन विभागः–कर्मानुष्ठानाय कृष्णपक्षोऽहः, स्वापार्थं शुक्लपक्षो रात्रिः ॥ ६६ ॥

दैवे रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ ६७ ॥

दैवे रात्र्यहनी वर्षमिति ॥ मानुषाणां वर्षं देवानां रात्रिदिने भवतः। तयोरप्ययं विभागः–नराणामुदगयनं देवानामहः; तत्र प्रायेण दैवकर्मणामनुष्ठानं, दक्षिणायनं तु रात्रिः ॥ ६७ ॥

ब्राह्मस्य तु क्षपाहस्य यत्प्रमाणं समासतः ।
एकैकशो युगानां तु क्रमशस्तन्निबोधत ॥ ६८ ॥

ब्राह्मस्येति ॥ ब्रह्मणोऽहोरात्रस्य यत्परिमाणं प्रत्येकं युगानां च कृतादीनां तत्क्रमेण समासतः संक्षेपतः शृणुत । प्रकृतेऽपि कालविभागे यद्ब्रह्मणोऽहोरात्रस्य पृथक् प्रतिज्ञानं तत्तदीयज्ञानस्य पुण्यफलज्ञानार्थम् । वक्ष्यति च (१।७३) 'ब्राह्मं पुण्यमहर्विदुः' इति । तद्वेदनात्पुण्यं भवतीत्यर्थः ॥ ६८ ॥

चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ ६९ ॥

चत्वार्याहुरिति ॥ चत्वारि वर्षसहस्राणि कृतयुगकालं मन्वादयो वदन्ति तस्य तावद्वर्षशतानि संध्या संध्यांशश्च भवति । युगस्य पूर्वा संध्या, उत्तरश्च संध्यांशः । तदुक्तं विष्णुपुराणे–'तत्प्रमाणैः शतैः संध्या पूर्वा तत्राभिधीयते। संध्यांशकश्च तत्तुल्यो युगस्यानन्तरो हि यः ॥ संध्यासंध्यांशयोरन्तर्यः कालो मुनिसत्तम । युगाख्यः स तु विज्ञेयः कृतत्रेतादिसंज्ञकः ॥' वर्षसंख्या चेयं दिव्यमानेन, तस्यैवानन्तरप्रकृतत्वात् । 'दिव्यैर्वर्षसहस्रैस्तु कृतत्रेतादिसंज्ञितम् । चतुर्युगं द्वादशभिस्तद्विभागं निबोध मे ॥' इति विष्णुपुराणवचनाच्च ॥६९॥

इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु ।
एकापायेन वर्तन्ते सहस्राणि शतानि च ॥ ७० ॥

इतरेष्विति ॥ अन्येषु त्रेताद्वापरकलियुगेषु संध्यासंध्यांशसहितेषु एकहान्या सहस्राणि शतानि च भवन्ति । तेनैवं संपद्यते–त्रीणि वर्षसहस्राणि त्रेतायुगं; तस्य त्रीणि वर्षशतानि संध्या संध्यांशश्च । एवं द्वे वर्षसहस्रे द्वापरः, तस्य द्वे वर्षशते संध्या संध्यांशश्च । एवं वर्षसहस्रं कलिः, तस्यैकवर्षशतं संध्या संध्यांशश्च ॥ ७० ॥

यदेतत्परिसंख्यातमादावेव चतुर्युगम् ।
एतद्द्वादशसाहस्रं देवानां युगमुच्यते ॥ ७१ ॥

यदेतदिति ॥ एतस्य श्लोकस्यादौ यदेतन्मानुषं चतुर्युगं परिगणितं एत-

देवानां युगमुच्यते । 'चतुर्युग'शब्देन संध्यासंध्यांशयोरप्राप्तिशङ्कायामाह—एतद्द्वादशसाहस्रमिति । स्वार्थेऽण् । चतुर्युगैरेव द्वादशसंख्यैर्दिव्यं युगमिति तु मेधातिथेर्भ्रमो नादर्तव्यः । मनुनानन्तरं दिव्ययुगसहस्रेण ब्रह्माहस्याप्यभिधानात् । विष्णुपुराणे च मानुषचतुर्युगसहस्रेण ब्रह्माहःकीर्तनान्मानुषचतुर्युगेनैव दिव्ययुगानुगमनात् । तथा च विष्णुपुराणम्—'कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । प्रोच्यते तत्सहस्रं तु ब्रह्मणो दिवसो मुने' ॥ ७१ ॥

**दैविकानां युगानां तु सहस्रं परिसंख्यया ।**
**ब्राह्ममेकमहर्ज्ञेयं तावतीं रात्रिमेव च ॥ ७२ ॥**

दैविकानामिति ॥ देवयुगानां सहस्रं ब्राह्मं दिनं ज्ञातव्यम् । सहस्रमेव रात्रिः । परिसंख्ययेति श्लोकपूरणोऽर्थानुवादः ॥ ७२ ॥

**तद्वै युगसहस्रान्तं ब्राह्मं पुण्यमहर्विदुः ।**
**रात्रिं च तावतीमेव तेऽहोरात्रविदो जनाः ॥ ७३ ॥**

तद्वै युगेति ॥ युगसहस्रेणान्तः समाप्तिर्यस्य तद्ब्राह्ममहस्तत्परिमाणां च रात्रिं ये जानन्ति तेऽहोरात्रज्ञा इति स्तुतिरियम् । स्तुत्या च ब्राह्ममहोरात्रं ज्ञातव्यमिति विधिः परिकल्प्यते । अत एतत्पुण्यहेतुत्वात्पुण्यमिति विशेषणं कृतम् ॥ ७३ ॥

**तस्य सोऽहर्निशस्यान्ते प्रसुप्तः प्रतिबुध्यते ।**
**प्रतिबुद्धश्च सृजति मनः सदसदात्मकम् ॥ ७४ ॥**

तस्येति ॥ स ब्रह्मा तस्य पूर्वोक्तस्य स्वीयाहोरात्रस्य समाप्तौ प्रतिबुद्धो भवति । प्रतिबुद्धश्च स्वीयं मनः सृजति भूर्लोकादित्रयसृष्टये नियुङ्क्ते नतु जनयति । तस्य महाप्रलयानन्तरं जातत्वादनष्टत्वाच्च, अवान्तरप्रलये भूर्लोकादित्रयमात्रनाशात् सृष्ट्यर्थं मनोनियुक्तिरेव मनःसृष्टिः । तथा च पुराणे श्रूयते—'मनः सिसृक्षया युक्तं सर्गाय निदधे पुनः' इति । अथवा 'मनः'शब्दोऽयं महत्तत्त्वपर एव । यद्यपि तन्महाप्रलयानन्तरमुत्पन्नं, 'महान्तमेव च' ( १।१८ ) इत्यादिना सृष्टिरपि तस्योक्ता, तथाप्यनुक्तं भूतानामुत्पत्तिक्रमं तद्गुणांश्च कथयितुं महाप्रलयानन्तरितामेव महदादिसृष्टिं भूतसृष्टिं च हिरण्यगर्भस्यापि परमार्थत्वात्तत्कर्तृतामनुवदति । एतेनेदमुक्तं भवति—ब्रह्मा महाप्रलयानन्तरितसृष्ट्यादौ परमात्मरूपेण महदादितत्त्वानि जगत्सृष्ट्यर्थं सृजति । अत एव शेषे वक्ष्यति ( १।७८ ) 'इत्येषा सृष्टिरादितः' इति । अवान्तरप्रलयानन्तरं तु मनःप्रभृतिसृष्टावभिधानक्रमेणैव प्राथम्यप्राप्तिः 'इत्येषा सृष्टिरादितः' इति निष्प्रयोजनोऽनुवादः स्यात् ॥ ७४ ॥

---

१ अवान्तरप्रलय-महाप्रलयत्वेन प्रलयस्य द्वैविध्यम्, तत्राद्ये मनसो हि पूर्वमेवोत्पन्नत्वान्न तत्रान्तर्भावत्वं; द्वितीयपक्षे तु मनोहेतुत्वान्महत्तत्त्वमेव मन इति सर्वमनवद्यम् ।

**मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।**
**आकाशं जायते तस्मात्तस्य शब्दं गुणं विदुः ॥ ७५ ॥**

मनः सृष्टिमिति ॥ मनो महान् सृष्टिं करोति । परमात्मनः स्रष्टुमिच्छया प्रेर्यमाणं तस्मादाकाशमुत्पद्यते । तच्च पूर्वोक्तानुसारादहंकारतन्मात्रक्रमेणाकाशस्य शब्दं गुणं विदुर्मन्वादयः ॥ ७५ ॥

**आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।**
**बलवाञ्जायते वायुः स वै स्पर्शगुणो मतः ॥ ७६ ॥**

आकाशादिति ॥ आकाशात्तु विकारजनकात्सुरभ्यसुरभिगन्धवहः पवित्रो बलवांश्च वायुरुत्पद्यते । स च स्पर्शाख्यगुणवान्मन्वादीनां संमतः ॥ ७६ ॥

**वायोरपि विकुर्वाणाद्विरोचिष्णु तमोनुदम् ।**
**ज्योतिरुत्पद्यते भास्वत्तद्रूपगुणमुच्यते ॥ ७७ ॥**

वायोरपीति ॥ वायोरपि तेज उत्पद्यते । विरोचिष्णु परप्रकाशकं तमोनाशनं भास्वत्प्रकाशकम् । तच्च गुणरूपमभिधीयते ॥ ७७ ॥

**ज्योतिषश्च विकुर्वाणादापो रसगुणाः स्मृताः ।**
**अद्भ्यो गन्धगुणा भूमिरित्येषा सृष्टिरादितः ॥ ७८ ॥**

ज्योतिषश्चेति ॥ तेजस आप उत्पद्यन्ते । ताश्च रसगुणयुक्ताः । अद्भ्यो गन्धगुणयुक्ता भूमिरित्येषा महाप्रलयानन्तरसृष्ट्यादौ भूतसृष्टिः । तैरेव भूतैरवान्तरप्रलयानन्तरमपि भूरादिलोकत्रयनिर्माणम् ॥ ७८ ॥

**यत्प्राग्द्वादशसाहस्रमुदितं दैविकं युगम् ।**
**तदेकसप्ततिगुणं मन्वन्तरमिहोच्यते ॥ ७९ ॥**

यत्प्रागिति ॥ यत्पूर्वं द्वादशवर्षसहस्रपरिमाणं संध्यासंध्यांशसहितं मनुष्याणां चतुर्युगं देवानामेकं युगमुक्तं तदेकसप्ततिगुणितं मन्वन्तराख्यः काल इह शास्त्रेऽभिधीयते । तत्रैकस्य मनोः सर्गाद्यधिकारः ॥ ७९ ॥

**मन्वन्तराण्यसंख्यानि सर्गः संहार एव च ।**
**क्रीडन्निवैतत्कुरुते परमेष्ठी पुनः पुनः ॥ ८० ॥**

मन्वन्तराणीति ॥ यद्यपि चतुर्दशमन्वन्तराणि पुराणेषु परिगण्यन्ते, तथापि सर्गप्रलयानामानन्त्यादसंख्यानि । आवृत्त्या सर्गः संहारश्चासंख्यः । एतत्सर्वं क्रीडन्निव प्रजापतिः पुनः पुनः कुरुते । सुखार्था हि प्रवृत्तिः क्रीडा । तस्य चाप्तकामत्वान्न सुखार्थितेति 'इव'शब्दः प्रयुक्तः । परमे स्थानेऽनावृत-

एवमाध्यात्मिकभूतादिकं लीनमेकत्वेन भावयित्वा,—

प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं विद्यात्तं पुरुषं परम् ॥ १२२ ॥

प्रशासितारमिति ॥ प्रशासितारं नियन्तारं ब्रह्मादिस्तम्बपर्यन्तस्य चेतनाचेतनस्य जातेर्योऽयमग्न्यादीनामौष्ण्यादिनियमो यश्चादित्यादीनां भ्रमणादिनियमो यश्च कर्मणां फलं प्रतिनियतमेतत्सर्वं परमात्माधीनम् । तथा च 'एतस्यैवाऽक्षरस्य प्रशासने गार्गि' ( बृ. ३।८।९ ) इत्याद्युपनिषदः । तथा 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' इति । तथा अणोरणीयांसं सर्वात्मत्वात् । तथा च श्रुतिः (श्वेता.५।९)— 'वालाग्रशतभागस्य शतधाकल्पितस्य च । भागो जीवेति विज्ञेयः स चानन्त्याय कल्पते ॥' रुक्माभम् । यद्यपि 'अशब्दमस्पर्शमरूपमव्ययम्' (का.१।३।१५) इत्याद्युपनिषदा रूपं परमात्मनो निषिद्धं तथाप्युपासनाविशेषे शुद्धसुवर्णाभम् । अत एव 'य एषोऽन्तरादित्ये हिरण्मय' (छां.१।६।६) इत्यादि छान्दोग्योपनिषत् । स्वप्नधीगम्यं दृष्टान्तोऽयम्, स्वप्नधीसदृशज्ञानग्राह्यम् । यथा स्वप्नधीश्चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यत एवमात्मधीरपि । अत एव व्यासः—'नैवासौ चक्षुषा ग्राह्यो न च शिष्टैरपीन्द्रियैः । मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः ॥' एवंविधं परात्मानमनुचिन्तयेत् ॥ १२२ ॥

एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ १२३ ॥

एतमिति ॥ एतं च परमात्मानमग्नित्वेनैके याज्ञिका उपासते । तथा 'तमेकमग्निम्' इत्यध्वर्यव उपासते । अन्ये पुनः स्रष्टृत्वात्स्रष्ट्राख्यप्रजापतिरूपतयोपासते । एके पुनरैश्वर्ययोगादिन्द्ररूपतयोपासते । अपरे पुनः प्राणत्वेनोपासते । 'सर्वाणि भूरादीनीमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहतः' इत्यादिश्रुतिदर्शनात् । अपरे पुनरपगतप्रपञ्चात्मकं सच्चिदानन्दस्वरूपं परमात्मानमुपासते । मूर्तामूर्तस्वरूपे च ब्रह्मणि सर्वा एवोपासनाः श्रुतिप्रसिद्धा भवन्ति ॥ १२३ ॥

एष सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥ १२४ ॥

एष इति ॥ एष आत्मा सर्वान्प्राणिनः पञ्चभिः पृथिव्यादिभिर्महाभूतैः शरीरारम्भकैः परिगृह्य पूर्वजन्मार्जितकर्मापेक्षयोत्पत्तिस्थितिविनाशै रथादिचक्रवदसकृदुपावर्तमानैरामोक्षात्संसारिणः करोति ॥ १२४ ॥

इदानीं मोक्षत्वेनोक्तसर्वधर्मश्रेष्ठतया सर्वत्र परमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति—

एवं यः सर्वभूतेषु पश्यत्यात्मानमात्मना ।
स सर्वसमतामेत्य ब्रह्माभ्येति परं पदम् ॥ १२५ ॥
[ चतुर्वेदसमं पुण्यमस्य शास्त्रस्य धारणात् ।
भूयो वाप्यतिरिच्येत पापनिर्यातनं महत् ॥ ]

एवं यः सर्वभूतेष्विति ॥ एवं 'सर्वभूतेषु चात्मानम्' (१२।९) इत्याद्युक्तप्रकारेण यः सर्वभूतेष्ववस्थितमात्मानमात्मना पश्यति स ब्रह्मसाक्षात्कारात्परं श्रेष्ठं पदं स्थानं ब्रह्म प्राप्नोति । तत्रात्यन्तं लीयते, मुक्तो भवतीत्यर्थः ॥ १२५ ॥

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तं पठन्द्विजः ।
भवत्याचारवान्नित्यं यथेष्टां प्राप्नुयाद्गतिम् ॥ १२६ ॥
[ मनुः स्वायंभुवो देवः सर्वशास्त्रार्थपारगः ।
तस्यास्यनिर्गतं धर्मं विचार्य बहुविस्तरम् ॥
ये पठन्ति द्विजाः केचित्सर्वपापोपशान्तिदम् ।
ते गच्छन्ति परं स्थानं ब्रह्मणः सद्म शाश्वतम् ॥ ]

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः ॥ १२ ॥

इत्येतदिति ॥ समाप्त्यर्थ 'इति'शब्दः । एतत्स्मृतिशास्त्रं भृगुणा प्रकर्षेणोक्तं द्विजातिः पठन् विहितानुष्ठाननिषिद्धवर्जनात्सदाचारवान् भवति । यथापेक्षितां च स्वर्गापवर्गादिरूपां गतिं प्राप्नुयादिति ॥ १२६ ॥

( अथ टीकाकृत्प्रशस्तिः । )

सारासारवचःप्रपञ्चनविधौ मेधातिथेश्चातुरी
स्तोकं वस्तु निगूढमल्पवचनाद्गोविन्दराजो जगौ ।
ग्रन्थेऽस्मिन्धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता
स्पष्टं मानवमर्थतत्त्वमखिलं वक्तुं कृतोऽयं श्रमः ॥ १ ॥
प्रायो मुनिभिर्विवृतं कथयत्येषा मनुस्मृतेरर्थम् ।
दशभिर्ग्रन्थसहस्रैः ससदशयुता कृता वृत्तिः ॥ २ ॥
सेयं मया मानवधर्मशास्त्रे व्यधायि वृत्तिर्विदुषां हिताय ।
दुर्बोधजातेर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ॥ ३ ॥

इति वारेन्द्रिनन्दनावासीयदिवाकरात्मजश्रीमत्कुल्लूकभट्टकृतायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः ॥ १२ ॥

इति श्रीकुल्लूकभट्टविरचिता मन्वर्थमुक्तावली समाप्ता ॥

समाप्तैषा मनुसंहिता ॥

# परिशिष्टम् १.

## मुद्रितामुद्रितप्राच्यधर्मग्रन्थेषु मनूक्तित्वेनोद्धृतानां प्रचलितमनुसंहितायां चानुपलब्धानां मनुवचनानां समुच्चयः ।

---

स्मृतिचन्द्रिकायाम्—

यत्क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते ।
यत्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ १ ॥
त्र्यवरैः साक्षिभिर्भाव्यौ नृपब्राह्मणसन्निधौ ।
स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ।
ततो यदन्यद्विब्रूयुर्धर्मार्थे तदपार्थकम् ॥ २ ॥
ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हतः कर्म गृह्णीयुर्दक्षिणां तथा ॥ ३ ॥
विभागे तु कृते किंचित् सामान्यं यत्र दृश्यते ।
नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हि ॥ ४ ॥
विभागे यत्र संदेहो दायादानां परस्परम् ॥ ५ ॥
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि ।
आरम्भकृत्सहायश्च दोषभाजौ तदर्धतः ॥ ६ ॥
गायत्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
गायत्रीतश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥ ७ ॥
आसुराणां कुले जाता जातिपूर्वपरिग्रहे ।
तस्यादर्शनमात्रेण निराशाः पितरो गताः ॥ ८ ॥
शिष्टाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ॥ ९ ॥
धर्मव्यतिक्रमो वै हि महतां साहसं तथा ।
तदन्वीक्ष्य प्रयुञ्जानः सीदत्येव रजोबलः ॥ १० ॥
यथैव वेदाध्ययनं धर्मशास्त्रमिदं तथा ।
अध्येतव्यं ब्राह्मणेन नियतं स्वर्गमिच्छता ॥ ११ ॥
पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥ १२ ॥

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवचनं तथा ॥ १३ ॥
पिता पितृव्यो भ्राता वा चैनामध्यापयेत्पुरः ।
स्वगृहे चैव कन्याया भैक्ष्यचर्या विधीयते ॥ १४ ॥
वर्जयेदजिनं दण्डं जटाधारणमेव च ॥ १५ ॥
समतिक्रान्तकालाश्च पतिताः सर्व एव ते ।
नैवावधिपूर्तावदापद्यपि च कर्हिचित् ॥ १६ ॥
हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च ।
भुक्त्वा ह्यशुचितां याति दाता स्वर्गं न गच्छति ॥ १७ ॥
सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ।
ऋषिदेवमनुष्याणां वेदश्चक्षुः सनातनः ॥ १८ ॥
दशानां तु सहस्राणां युक्तानां धुर्यवाहिनाम् ।
सुपात्रे विनियुक्तानां कन्या विद्या च तत्समम् ॥ १९ ॥
शक्रध्वजनिपाते च उल्कापाते तथैव च ।
सामध्ययने(?) ऋग्यजुषि नाधीयीत कदाचन ॥ २० ॥
अनध्यायस्त्रिरात्रं तु भूमिकम्पे तथैव च ।
अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु ॥ २१ ॥
नाग्निहोत्रादिभिस्तत्स्याद्रक्षतो ब्राह्मणस्य वा ।
यत्कन्यां विधिवद्दत्त्वा फलमाप्नोति मानवः ॥ २२ ॥
कन्या द्वादशवर्षे या न प्रदत्ता गृहे वसेत् ।
भ्रूणहत्या पितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥ २३ ॥
नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ २४ ॥
अलाभे देवखातानां सरसां सरितां तथा ।
उद्धृत्य चतुरः पिण्डान्पारक्ये स्नानमाचरेत् ॥ २५ ॥
अग्निवत्कपिलासत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रा पुनन्त्येते तस्मात्पश्येत नित्यशः ॥ २६ ॥

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृष्टं तु गृह्णानो हस्तच्छेदनमर्हति ।
समर्घं पण्यमाहृत्य महार्घं यः प्रयच्छति ॥ २७ ॥
स वै वार्धुषिको नाम यश्च वृद्ध्या प्रयोजयेत् ॥ २८ ॥
ग्रासमात्रा भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् ।
अग्रं चतुर्गुणीकृत्य हन्तकारो विधीयते ॥ २९ ॥

[ वृद्धमनुः ]

प्रतिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि ।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम् ॥ ३० ॥
पथि विक्रीय तद्भाण्डं वणिग् भृत्यं त्यजेद्यदि ।
अथ तस्यापि देयं स्याद्भृतेरर्थं लभेत सः ॥ ३१ ॥
यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति ।
भाटं न दद्याद्दाप्यः स्यादरूढस्यापि भाटकम् ॥ ३२ ॥
स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥ ३३ ॥
अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥ ३४ ॥
कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः ॥ ३५ ॥
यस्यामस्तं रविर्याति पितरस्तामुपासते ।
तिथिं तेभ्यो यतो दत्तो ह्यपराह्णः स्वयंभुवा ॥ ३६ ॥
मध्ये वा यदि वाप्यन्ते यत्र कन्यां रविर्व्रजेत् ।
पक्षः स कालः संपूर्णः श्राद्धं तत्र विधीयते ॥ ३७ ॥
ऋतुकाले नियुक्तो वा नैव गच्छेत्स्त्रियं क्वचित् ।
तत्र गच्छन्समाप्नोति ह्यनिष्टं फलमेव च ॥ ३८ ॥
स्वयं धौतेन कर्तव्याः क्रिया धर्म्या विपश्चिता ।
समाहितोपलिप्ते तु द्वारि कुर्वीत मण्डले ॥ ३९ ॥
न नियुक्तः शिरोवर्ज्यं माल्यं शिरसि वेष्टयेत् ॥ ४० ॥

अनुष्ठितं तथा देवैर्मुनिभिर्यदनुष्ठितम् ।
नानुष्ठितं मनुष्यैस्तदुक्तं कर्म समाचरेत् ॥ ४१ ॥
खादिरस्य करञ्जस्य कदम्बस्य तथैव च ।
अर्कस्य करवीरस्य कुटजस्य विशेषतः ॥ ४२ ॥
प्रक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ ।
तैलेनाभ्यञ्जमानस्तु धनायुर्भ्यां प्रहीयते ॥ ४३ ॥
अन्यायोपात्तवित्तस्य पतितस्य च वार्धुषेः ।
न स्नायादुदपानेषु स्नात्वा कृच्छ्रं समाचरेत् ॥ ४४ ॥
मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ ४५ ॥
संक्रान्त्यां भानुवारे च सप्तम्यां राहुदर्शने ।
आरोग्यपुत्रमित्रार्थी न स्नायादुष्णवारिणा ॥ ४६ ॥
स गोहत्याकृतं पापं प्राप्नोत्येव न संशयः ॥ ४७ ॥
षडोङ्कारं जपन्विप्रो गायत्रीं मनसा शुचिः ।
अनेकजन्मजैः पापैर्मुच्यते नात्र संशयः ॥ ४८ ॥
तिस्रो व्याहृतयः पूर्वषडोङ्कारसमन्विताः ।
पुनः संहृत्य चोङ्कारमन्त्रस्याद्यन्तयोस्तथा ॥ ४९ ॥
सौङ्कारचतुरावृत्य विज्ञेया सा शताक्षरा ।
शताक्षरां समावृत्य सर्ववेदफलं लभेत् ॥ ५० ॥
एतया ज्ञातया नित्यं वाङ्मयं विदितं भवेत् ।
उपासितं भवेत्तेन विश्वं भुवनसप्तकम् ॥ ५१ ॥
यथा योधन (?) हस्तेभ्यो राज्यं गच्छति धार्मिकः ।
एवं तिलसमायुक्तं जलं प्रेतेषु गच्छति ॥ ५२ ॥
एकैकस्य तिलैर्मिश्रांस्त्रींस्त्रीन्कृत्वा जलाञ्जलिम् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥ ५३ ॥
इहजन्मकृतं पापमन्यजन्मकृतं च यत् ।
अङ्गारकचतुर्दश्यां तर्पयंस्तद्व्यपोहति ॥ ५४ ॥
न पिबेन्न च भुञ्जीत द्विजः सव्येन पाणिना ।
नैकहस्तेन च जलं शूद्रेणावर्जितं पिबेत् ॥ ५५ ॥

पिबतो यत्पतेत्तोयं भोजने मुखनिःसृतम् ।
अभोज्यं तद्भवेदन्नं भोक्ता भुञ्जीत किल्बिषी ॥ ५६ ॥
पीतावशेषितं कृत्वा ब्राह्मणः पुनरापिबेत् ।
त्रिरात्रं तु व्रतं कुर्याद्वामहस्तेन वा पुनः ॥ ५७ ॥

---

स्मृतिरत्नाकरे—

यस्य धर्मध्वजो नित्यं सुराड्ध्वज इवोच्छ्रितः ।
चरितानि च पापानि बैडालं नाम तं विदुः ॥ १ ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैतेऽन्त्यजजातयः ॥ २ ॥
आत्मानं धर्मकृत्यं च पुत्रदारांश्च पीडयेत् ।
लोभाद्यः पितरौ मोहात्स कदर्य इति स्मृतः ॥ ३ ॥
योऽर्थार्थी मां द्विजे दद्यात्पठेच्चैवाविधानतः ।
अध्याये च धनं प्राहुर्वेदविप्लावकं बुधाः ॥ ४ ॥
अख्यापनं नाध्ययनं प्रश्नपूर्वप्रतिग्रहः ।
याजनाध्यापने वादः षड्विधो वेदविक्रयः ॥ ५ ॥
स्वभावाद्यत्र विचरेत्कृष्णसारमृगो द्विजाः ।
विज्ञेयो धार्मिको देशो म्लेच्छदेशस्ततः परः ॥ ६ ॥
निवर्तकं हि पुरुषं निवर्तयति जन्मतः ।
प्रवर्तकं हि सर्वत्र पुनरावृत्तिहेतुकम् ॥ ७ ॥
संसारभीरुभिस्तस्माद्वियुक्तं कामवर्जनम् ।
विधिवत्कर्म कर्तव्यं ज्ञानेन सह सर्वदा ॥ ८ ॥
न देहिनां यतः शक्यं कर्तुं कर्माण्यशेषतः ।
तस्मादामरणाद्धैर्यं कर्तव्यं योगिना सदा ॥ ९ ॥
अर्थकामेष्वसक्तानां धर्मे ज्ञानं विधीयते ।
धर्मजिज्ञासमानानां प्रमाणं प्रथमं श्रुतिः ॥ १० ॥
हतं ज्ञानं क्रियाहीनं हतास्त्वज्ञानिनः क्रियाः ।
अपश्यन्नन्धको दग्धः पश्यन्नपि च पङ्गुकः ॥ ११ ॥

नान्यचित्तश्चिरं तिष्ठेन्न स्पृशेत्पाणिना शिरः ।
न ब्रूयान्न दिशः पश्येद्विण्मूत्रोत्सर्जने बुधः ॥ १२ ॥
परस्य शोणितस्पर्शे रेतोविण्मूत्रजे तथा ।
चतुर्णामपि वर्णानां द्वात्रिंशन्मृत्तिकाः स्मृताः ॥ १३ ॥
दन्तवद्दन्तलग्नेषु जिह्वास्पर्शे शुचिर्न तु ।
परिच्युतेष्ववस्थानान्निगरेन्नैव तच्छुचिः ॥ १४ ॥
त्रीन्पिण्डानथवोद्धृत्य स्नायादापत्सु ना सदा ।
अन्यैरपि कृते कूपे सरोवाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥ १५ ॥
नातुरो नारुणकरन्नाक्रान्ते च नभस्तले ।
न पराम्भसि नाल्पे च नाशिरस्कः कथंचन ॥ १६ ॥
गते देशान्तरं पत्यौ गन्धमाल्याञ्जनानि च ।
दन्तकाष्ठं च ताम्बूलं वर्जयेद्वनिता सती ॥ १७ ॥
आराध्यं देवमाराध्य बन्धूनप्यनुसृत्य च ।
भुक्त्वा व्याधौ च न स्नायात्तैलेनापि निशास्वपि ॥ १८ ॥
राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च ॥ १९ ॥
पुच्छे बिडालकं स्पृष्ट्वा स्नात्वा विप्रो विशुध्यति ।
भोजने कर्मकाले च विधिरेष उदाहृतः ॥ २० ॥
प्रक्षाल्य पादौ हस्तौ च ह्याचान्तो वाग्यतः शुचिः ।
तिथिवारादिकं श्रुत्वा सुसंकल्प्य यथाविधि ॥ २१ ॥
नोपतिष्ठेत यः पूर्वामुपास्ते न च पश्चिमाम् ।
स शूद्रवद्बहिष्कार्यः सर्वस्मात्साधुकर्मणः ॥ २२ ॥
यस्य देशं न जानाति स्थानं त्रिपुरुषं कुलम् ।
कन्यादानं नमस्कारं श्राद्धं तस्य विवर्जयेत् ॥ २३ ॥
एवं संध्यामुपास्याथ पितरावग्रजान् गुरून् ।
त्रिवर्णमूर्वशिष्टांश्च पार्श्वस्थानभिवादयेत् ॥ २४ ॥
अग्निहोत्रस्य शुश्रूषा संध्योपासनमेव च ।

कार्यं पत्न्या प्रतिदिनं बलिकर्म च नैत्यकम् ।
मुख्यकाले व्यतिक्रान्ते गौणकाले तथाचरेत् ॥ २५ ॥
आत्मशाखां परित्यज्य परशाखासु वर्तते ।
न जातु परशाखोक्तं बुधः कर्म समाचरेत् ॥ २६ ॥
समूलश्च भवेद्दर्भः पितॄणां यज्ञकर्मणि ।
मूलेन लोकाञ्जयति शक्रस्य च महात्मनः ॥ २७ ॥
माता पिता गुरुर्भ्राता प्रजादीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा उदाहृताः ॥ २८ ॥
द्विजातिभ्यो यथा लिप्सेत्प्रकृष्टेभ्यो विशेषतः ।
अपि वा जातिमात्रेभ्यो न तु शूद्रात्कथंचन ॥ २९ ॥
उत्कृष्टं वाऽपकृष्टं वा तयोः कर्म न विद्यते ।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥ ३० ॥
चणकव्रीहिगोधूमयवानां मुद्गमाषयोः ।
अनिषिद्धो ग्रहीतव्यो मुष्टिरेकोऽध्वनिर्जितैः ॥ ३१ ॥
त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ।
अतिदानं हि दानानां नास्ति दानं ततोऽधिकम् ॥ ३२ ॥
ज्ञानमत्तस्य यो दद्याद्वेदशास्त्रसमुद्भवम् ।
अपि देवास्तमर्चन्ति भर्गब्रह्मदिवाकराः ॥ ३३ ॥
पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते ।
तच्छान्तिरौषधैर्दानैर्जपहोमार्चनादिभिः ॥ ३४ ॥
यत्तज्ज्ञात्वा द्विजो धर्मे पापं नैव समाचरेत् ॥ ३५ ॥
गुरूणामभ्यधिक्षेपो वेदनिन्दासुहृद्वधः ।
ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशनम् ॥ ३६ ॥
तैलभेषजपाने तु औषधार्थं प्रकल्पयेत् ।
विषतैलेन गर्भार्थी पुत्र ते नास्ति पातकम् ॥ ३७ ॥
अतिबालामतिकृशामतिवृद्धामरोगिणीम् ।
हत्वा पूर्वविधानेन चरेच्चान्द्रायणं द्विजः ॥ ३८ ॥
एकवर्षे हते वत्से कृच्छ्रपादो विधीयते ।
अबुद्धिपूर्ववेशः स्यात्प्रभूते नास्ति पातकम् ॥ ३९ ॥

अग्निविद्युद्विपन्नानां प्रसूते नास्ति पातकम् ।
यच्चितं गोचिकित्सार्थं मूढगर्भातिपातने ॥ ४० ॥
यत्ने कृते विपत्तिश्चेत्प्रायश्चित्तं समाचरेत् ।
गवां च पर्वतारोहे नदीतीरे तथैव च ॥ ४१ ॥
प्रायश्चित्तं प्रकुर्वन्ति द्विजा वेदपरायणाः ॥ ४२ ॥
द्विजातीनामयं देहो न भोगाय प्रकल्पते ।
इह क्लेशाय महते प्रेत्यानन्तसुखाय च ॥ ४३ ॥
यदा तूपघातो(?)च्छिष्टानि यानि च ।
शुध्यन्ति दशभिः क्षारैः श्वकाकोपहतानि च ॥ ४४ ॥
बालैरनुपसंक्रान्तं नित्यं मेध्यमिति स्थितिः ॥ ४५ ॥
आपोहिष्ठादिमन्त्रेण मार्जयित्वा यथाविधि ।
आपः पुनन्तु मन्त्रेण जलं पीत्वा समाहितः ॥ ४६ ॥
सुरभिमत्या सहाब्लिङ्गैर्मार्जयित्वार्घ्यमुत्क्षिपेत् ।
द्वौ पादौ संपुटौ कृत्वा पाणिभ्यां पूरयेज्जलम् ॥ ४७ ॥
रवेरभिमुखस्तिष्ठंस्त्रिरूर्ध्वं संध्ययोः क्षिपेत् ॥ ४८ ॥
आर्द्रवासस्तु यः कुर्याज्जपहोमौ प्रतिग्रहम् ।
तत्सर्वं निष्फलं विद्यादित्येवं मनुरब्रवीत् ॥ ४९ ॥
धात्र्याः खादेन्न तु दिवा दधिसक्तूंस्तथा निशि ।
सर्वं च तिलसंबद्धं नाद्यादस्तमयं प्रति ॥ ५० ॥
तिलार्द्रदधिमिश्राणां तिलशाकानि निस्वदन् ॥ ५१ ॥
त्रयोदश्यां तु सप्तम्यां चतुर्थ्यामर्धरात्रतः ।
अर्वाङ्न नाध्ययनं कुर्यादिच्छेत्तस्य परायणम् ॥ ५२ ॥
रात्रौ यामद्वयादर्वाग्यदि पश्येत्त्रयोदशीम् ।
सा रात्रिः सर्वकर्मघ्नी शङ्कराराधनं विना ॥ ५३ ॥
चण्डालादेस्तु संस्पर्शे वारुणं स्नानमेव हि ।
इतराणि तु चत्वारि यथायोग्यं स्मृतानि हि ॥ ५४ ॥
मनुष्यतर्पणे चैव स्नाने वस्त्रादिपीडने ।
निवीतिस्तूभये विप्रस्तथा मूत्रपुरीषयोः ॥ ५५ ॥

वस्त्रं त्रिगुणितं यस्तु निष्पीडयति मूढधीः ।
वृथा स्नानं भवेत्तस्य यच्चैवादशमाम्बुभिः ॥ ५६ ॥
और्ध्वपुंड्रो मृदा धार्यो यतिना च विशेषतः ।
भस्मचन्दनगन्धादीन्वर्जयेद्यावदायुषा ॥ ५७ ॥

---

निर्णयसिन्धौ—

पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥ १ ॥
आदिष्टी नोदकं कुर्यादा व्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रमशुचिर्भवेत् ॥ २ ॥
यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।
चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ ।
राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ ३ ॥
षण्ढान्धबधिरादीनां विवाहोऽस्ति यथोचितम् ।
विवाहासंभवे तेषां कनिष्ठो विवहेत्तदा ॥ ४ ॥
वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः ॥ ५ ॥
प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी ॥ ६ ॥
अविद्वान्प्रतिगृह्णानो भस्मीभवति दारुवत् ॥ ७ ॥
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः ।
भवितव्यं भवद्भिर्नः श्वोभूते श्राद्धकर्मणि ॥ ८ ॥
दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि ।
आशौचे च व्यतिक्रान्ते नामकर्म विधीयते ॥ ९ ॥
वृद्धः शौचमृते लुप्तप्रत्याख्यातभिषक्क्रियः ।
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥ १० ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥ ११ ॥
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंपर्कदूषिता ।
ब्रह्मचर्यं चरेद्वापि प्रविशेद्वा हुताशनम् ॥ १२ ॥

मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकम् ।
कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रतात् ॥ १३ ॥
इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः ॥ १४ ॥
असंबन्धा भवेन्मातुः पिण्डेनैवोदकेन वा ।
सा विवाह्या द्विजातीनां त्रिगोत्रान्तरिता च या ॥ १५ ॥
श्वशूद्रपतिताश्चान्त्या मृताश्चेद्विजमन्दिरे ।
शौचं तत्र प्रवक्ष्यामि मनुना भाषितं यथा ॥ १६ ॥
दशरात्राच्छुनि मृते मासाच्छूद्रे भवेच्छुचिः ।
द्वाभ्यां तु पतिते गेहमन्त्यो मासचतुष्टयात् ॥ १७ ॥
अत्यन्तं वर्जयेद्गेहमित्येवं मनुरब्रवीत् ॥ १८ ॥
अर्धरात्रादधस्ताच्चेत्संक्रान्तिग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषभाक् ॥ १९ ॥
एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥ २० ॥
पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥ २१ ॥
जीवन्यदि समागच्छेद्घृतकुम्भे निमज्ज्य च ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥ २२ ॥
सप्तम्यां भानुवारे च मातापित्रोर्मृतेऽहनि ।
तिलैर्यस्तर्पणं कुर्यात्स भवेत्पितृघातकः ॥ २३ ॥
तैलाभ्यङ्गो नार्कवारे न भौमे
नो संक्रान्तौ वैधृतौ विष्टिषष्ठ्योः ।
पर्वस्वष्टम्यां च नेष्टः स इष्टः
प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः॥ २४ ॥
स्नुषास्वस्त्रीयतत्पुत्रज्ञातिसंबन्धिबान्धवाः ।
पुत्राभावे तु कुर्वीरन् सपिण्डान्तं यथाविधि ॥ २५ ॥
श्राद्धं करिष्यन्कृत्वा वा भुक्त्वा वापि निमन्त्रितः ।
उपोष्य च तथा भुक्त्वा नोपेयाच्च ऋतावपि ॥ २६ ॥

निमन्त्र्य विप्रांस्तदहर्वर्जयेन्मैथुनं क्षुरम् ।
प्रमत्तानां च स्वाध्यायं क्रोधं शोकं तथानृतम् ॥ २७ ॥
मृन्मयं दारुजं पात्रमयःपात्रं च यद्भवेत् ।
राजतं दैविके कार्ये शिलापात्रं च वर्जयेत् ॥ २८ ॥
अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकम् ।
प्रायश्चित्तमसौ स्मार्तं कृत्वाग्नीनादधीत च ॥ २९ ॥
द्वादशाहव्रतं चर्यात्रिरात्रमथवाऽस्य तु ।
स्नात्वोद्वहेत तां भार्यामन्यां वा तदभावतः ॥ ३० ॥
अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत् ।
अथैन्द्राग्नेन पशुना गिरिं गत्वा च तत्र तु ॥ ३१ ॥
क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः ।
गर्भभर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥ ३२ ॥
दशाहस्यान्तरो यस्य गङ्गातोयेऽस्थि मज्जति ।
गयायां मरणं यादृक् तादृक्फलमवाप्नुयात् ॥ ३३ ॥
द्वादशेऽहनि विप्राणामाशौचान्ते च भूभुजाम् ॥ ३४ ॥
वैश्यानां तु त्रिपक्षादावथवा स्यात्सपिण्डनम् ॥ ३५ ॥

---

शूद्रकमलाकरे—

जपस्तपस्तीर्थसेवा प्रव्रज्या मन्त्रसाधनम् ।
देवताराधनं चैव स्त्रीशूद्रपतनानि षट् ॥ १ ॥
विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधे ।
वैश्यः प्रतोदरश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥ २ ॥
गृह्याग्नौ तु पचेदन्नं लौकिके वापि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते ।
द्विजस्य मरणे वेश्म विशुद्ध्यति दिनत्रयात् ॥ ३ ॥
बैजिकादभिसंबंधादनुरुन्ध्यादहं त्र्यहम् ।
तस्माद्यत्नेन रक्ष्यास्ता भर्तव्या मनुरब्रवीत् ॥ ४ ॥
ग्राम्यधर्मे च पत्न्यां च परिग्राहस्य रक्षणे ॥ ५ ॥

भर्ता दैवं गुरुर्भर्ता धर्मतीर्थव्रतानि च ।
तस्मात्सर्वं परित्यज्य पतिमेकं समाचरेत् ॥ ६ ॥
भुङ्क्ते भुक्ते पतौ या तु स्वासीना चापि वाऽऽसिते ।
विनिद्रितो विनिद्राति सा स्त्री ज्ञेया पतिव्रता ॥ ७ ॥
स्त्रियाः श्रुतौ वा शास्त्रे वा प्रव्रज्या नाभिधीयते ।
प्रजा हि तस्याः स्वो धर्मः सवर्णादिति धारणा ॥ ८ ॥
ब्राह्मणाः क्षत्रिया वैश्याः स्वावधेरूर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥ ९ ॥
प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयम् ।
विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातकम् ॥ १० ॥
जीवञ्जातो यदि ततो मृतः सूतकमेव तु ।
सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकम् ॥ ११ ॥
विधवा कारयेच्छ्राद्धं यथाकालमतन्द्रिता ।
स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च ॥ १२ ॥
संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनीसुते ।
संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थितः ॥ १३ ॥
पित्रोः स्वसरि तद्वच्च पक्षिणीं क्षपयन्निशाम् ॥ १४ ॥
भगिन्यां संस्कृतायां तु भ्रातर्यपि च संस्कृते ।
मित्रे जामातरि प्रेते दौहित्रे भगिनीसुते ॥ १५ ॥
शालके तत्सुते चैव सद्यः स्नानेन शुध्यति ॥ १६ ॥
षण्ढं तु ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ॥ १७ ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः ॥ १८ ॥

---

संस्कारकौस्तुभे—

सर्वदेशेषु पूर्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे तु गर्हितम् ॥ १ ॥
विवाहेऽनधिकारेण ज्येष्ठकन्योत्थिता यदा ।
तदनुज्ञां विना चापि कनिष्ठामुद्वहेत्तदा ॥ २ ॥

शर्म देवश्च विप्रस्य वर्म राजा च भूभुजः ।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥ ३ ॥
चाण्डालान्नं द्विजो भुक्त्वा सम्यक् चान्द्रायणं चरेत् ।
बुद्धिपूर्वं तु कृच्छ्राब्दं पुनःसंस्कारमेव च ॥ ४ ॥
प्रदोषपश्चिमौ यामौ वेदाभ्यासेन योजयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते ।
चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ ॥ ५ ॥

---

प्रयोगरत्ने (नारायणभट्टीये)—

जातकर्मादिसंस्काराः स्वकाले न भवन्ति चेत् ।
चौलादर्वाक् प्रकुर्वीत प्रायश्चित्तादनन्तरम् ॥ १ ॥
लेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः ।
उदितं तु विजानीयात्तत्र होमं प्रकल्पयेत् ॥ २ ॥

---

संस्कारमयूखे—

शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः ॥ १ ॥
ततोऽन्नप्राशनं मासि षष्ठे कार्यं यथाविधि ।
अष्टमे वाऽथ कर्तव्यं यद्वेष्टं मङ्गलं गृहे ॥ २ ॥
तिस्रो वर्णानुपूर्वेण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ॥ ३ ॥
अथाग्न्योर्गृह्ययोर्योगं सपत्नीभेदजातयोः ।
सहाधिकारसिद्ध्यर्थमहं वक्ष्यामि शौनक ॥ ४ ॥
क्षुधितं तृषितं श्रान्तं बलीवर्दं न योजयेत् ॥ ५ ॥

---

आचारमयूखे—

यस्मिन्देशे तु यत्तोयं या च यत्रैव मृत्तिका ।
सैव तत्र प्रशस्ता स्यात्तया शौचं विधीयते ॥ १ ॥
मूत्रे तिस्रः पादयोस्तु हस्तयोस्तिस्र एव तु ।
मृदः पञ्चदशा मेध्ये हस्तादीनां विशेषतः ॥ २ ॥

निष्पीड्य स्नानवस्त्रं तु पश्चात्संध्यां समाचरेत् ।
अन्यथा कुरुते यस्तु स्नानं तस्याफलं भवेत् ॥ ३ ॥
असामर्थ्याच्छरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादिकं प्रोक्तं मुनिभिः शौनकादिभिः ॥ ४ ॥
वस्त्रेणाच्छाद्य तु करं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जप्यं तद्धीनमफलं स्मृतम् ॥ ५ ॥
भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथंचन ।
अन्यत्र दधिसक्त्वाज्यपललक्षीरमध्वपः ॥ ६ ॥
स्त्रीणां च प्रेक्षणात्स्पर्शाद्धास्यशृङ्गारभाषणात् ।
स्यन्दते ब्रह्मचर्यं च न दारेष्वृतुसंगमात् ॥ ७ ॥
ऋतौ तु गर्भं शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ ८ ॥

---

श्राद्धमयूखे—

मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः ।
मधुप्रधानं शूद्रस्य सर्वेषां चाविरोधि यत् ॥ १ ॥
कृच्छ्रद्वादशरात्रेण मुच्यते कर्मणस्ततः ।
तस्माद्विद्वान्नैव दद्यान्न याचेन्न च दापयेत् ॥ २ ॥

---

व्यवहारमयूखे—

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी चैव गोत्रं तु पालकस्य च ॥ १ ॥
स्त्रीधनं स्यादपत्यानां दुहिता च तदर्थिनी ।
अप्रत्ता चेत्समूढा तु लभते मानपात्रकम् ॥ २ ॥

---

प्रायश्चित्तमयूखे—

पतत्यर्धं शरीरस्य भार्या यस्य सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥ १ ॥

योयस्य हिंस्याद्द्रव्याणि ज्ञानतोऽज्ञानतोऽपि वा ।
एतस्योत्पादयेत्तुष्टिं राज्ञा दद्याच्च तत्समम् ॥ २ ॥
यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम् ॥ ३ ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
स्नात्वा पीत्वा च हुत्वा च कृमिदष्टः शुचिर्भवेत् ॥ ४ ॥
असत्प्रतिग्रहीतारस्तथैवायाज्ययाजकाः ।
नक्षत्रैर्जीवते यश्च सोऽन्धकारं प्रपद्यते ॥ ५ ॥
अटव्यामटमानस्य ब्राह्मणस्य विशेषतः ।
प्रनष्टसलिले देशे कथं शुद्धिर्विधीयते ॥ ६ ॥
अपो दृष्ट्वैव विप्रस्तु कुर्याच्चैव सचैलकम् ।
गायत्र्याष्टशतं जाप्यं स्नानमेतत्समाचरेत् ॥ ७ ॥
देशकालं समासाद्यमवस्थामात्मनस्तथा ।
धर्मशौचेऽवतिष्ठेत न कुर्याद्वेगधारणम् ॥ ८ ॥
त्रिरात्रं वाप्युपवसेत्र्यहं त्रिः पर्वणी भवेत् ।
तथैवाम्भसि नग्नस्तु त्रिः पठेदघमर्षणम् ॥ ९ ॥
यदह्ना कुरुते पापं कर्मणा मनसा गिरा ।
आसीनः पश्चिमां संध्यां प्राणायामैर्निहन्ति तैः ॥ १० ॥
पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥ ११ ॥
प्रथमेऽह्नि त्रिरात्रं स्याद्द्वितीये द्व्यहमेव तु ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमेव च ॥ १२ ॥
मातुर्मातृगमने पितुर्मातृगमने तथा ।
एकास्त्वकामतो गत्वा द्विजश्चान्द्रायणं चरेत् ॥ १३ ॥

---

विवादभङ्गार्णवे—

ब्रह्मदायागतां भूमिं हरेयुर्ब्राह्मणीसुताः ।
गृहं द्विजातयः सर्वं तथा क्षेत्रं क्रमागतम् ॥ १ ॥
देशनामनदीभेदान्निकटेऽपि भवेद्यदि ।
[illegible] ॥ २ ॥

दशरात्रेण या वार्ता यत्र न श्रूयतेऽथवा ।
गुरोः शिष्ये पितुः पुत्रे दम्पत्योः स्वामिभृत्ययोः ॥ ३ ॥
एकोदरे जीवति तु सापत्नो न लभेद्धनम् ।
स्थावरेऽप्येवमेव स्यात्तदभावे लभेत वै ॥ ४ ॥
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरके पीडने चास्य तस्माद्यत्नेन तं भरेत् ॥ ५ ॥
ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः ।
वृत्तिं तेऽपि हि काङ्क्षन्ति वृत्तिलोपो विगर्हितः ॥ ६ ॥
ऋणमस्मिन्सन्नयत्यमृतत्वं च विन्दति ।
तेन चानृणतां याति पितॄणां जीवतां सुखम् ॥ ७ ॥
षाण्मासिकेऽपि काले तु भ्रान्तिः संजायते नृणाम् ।
धात्राक्षराणि सृष्टानि यत्रारूढान्यतः पुरा ॥ ८ ॥
धर्मार्थं ब्राह्मणे दानं यशोऽर्थे तदनर्थकम् ।
ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामी च खलु धर्मार्थं दद्यात्पापीयसेऽल्पकम् ॥ ९ ॥
सर्वत्रादायकं राजा हरेद्ब्रह्मस्ववर्जितम् ।
अदायकं तु ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥ १० ॥
विरोधे तु मिथस्तेषां व्यवहारो न सिध्यति ॥ ११ ॥
ऋतुस्नाता तु या भार्या भर्तारं नोपगच्छति ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं विनिवासयेत् ॥ १२ ॥
स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते ।
न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्तनम् ॥ १३ ॥
स्वच्छन्दव्यभिचारिण्या विवस्वांस्त्यागमब्रवीत् ।
न वधं न च वैरूप्यं बन्धं स्त्रीणां विवर्जयेत् ॥ १४ ॥
दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ।
सा भर्तृलोकमाप्नोति यथैवारुन्धती तथा ॥ १५ ॥
यल्लब्धं लाभकाले तु स्वजाता कन्यया सह ।
कन्यागतं तु तद्विद्याच्छुद्धं वृद्धिकरं स्मृतम् ॥ १६ ॥

वैवाहिकं तु तद्विद्याद्भार्यया यत्समागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधनम् ॥ १७ ॥
आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥ १८ ॥
तत्र लब्धं तु यत्किंचिद्धनं शौर्येण तद्भवेत् ।
ध्वजाहृतं भवेद्यच्च विभाज्यं नैव तत्स्मृतम् ॥ १९ ॥
संग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥ २० ॥

---

तहेमाद्रौ—

विहितस्याननुष्ठानमिन्द्रियाणामनिग्रहः ।
निषिद्धसेवनं नित्यं वर्जनीयं प्रयत्नतः ॥ १ ॥

---

ानहेमाद्रौ—

(मनुः)

इष्टे यज्ञे यद्दीयते दक्षिणादि तदैष्टिकम् ।
बहिर्वेदि च यद्दानं दीयते तद्धि पौर्तिकम् ॥ १ ॥
स्वर्गायुर्भूतिकामेन तथा पापोपशान्तये ।
मुमुक्षुणा च दातव्यं ब्राह्मणेभ्यस्तथाऽन्वहम् ॥ २ ।
ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥ ३ ॥
अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदो हि सः ॥ ४ ॥
पात्रभूतो हि यो विप्रः प्रतिगृह्य प्रतिग्रहम् ।
असत्सु विनियुञ्जीत तस्य देयं न किंचन ॥ ५ ॥
संचयं कुरुते यश्च प्रतिगृह्य समन्ततः ।
धर्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्चयेत् ॥ ६ ॥
न कुर्यात्कस्यचित्पीडां कर्मणा मनसा गिरा ।

संध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥ ८ ॥
गुरूणां संनिधौ दाने योगे चैव विशेषतः ।
एषु मौनं समातिष्ठन् स्वर्गं प्राप्नोति मानवः ॥ ९ ॥
विष्णुः पराशरो दक्षः संवर्तव्यासहारिताः ।
शातातपो वसिष्ठश्च यमापस्तम्बगौतमाः ॥ १० ॥
देवलः शङ्खलिखितौ भरद्वाजोशनोऽत्रयः ।
शौनको याज्ञवल्क्यश्च दशाष्टौ स्मृतिकारिणः ॥ ११ ॥

---

श्राद्धहेमाद्रौ—

यत्किंचिन्मधुसंमिश्रं गोक्षीरघृतपायसम् ।
दत्तमक्षयमित्याहुः पितरस्त्वेव देवताः ॥ १ ॥
अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।
पूर्वेद्युर्वा प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥ २ ॥
एकपिण्डकृतानां तु पृथक्त्वं नोपपद्यते ।
सपिण्डीकरणादूर्ध्वमृते कृष्णचतुर्दशीम् ॥ ३ ॥
कुर्वन्प्रतिपदि श्राद्धं सरूपान् लभते सुतान् ।
कन्यकां तु द्वितीयायां तृतीयायां तु बन्दिनः ॥ ४ ॥
पशून् क्षुद्रांश्चतुर्थ्यां तु पञ्चम्यां शोभनान्सुतान् ।
षष्ठ्यां द्यूतं कृषिं चापि सप्तम्यां लभते नरः ॥ ५ ॥
अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ।
नवम्यामेकखुरकं दशम्यां द्विखुरांस्तथा ॥ ६ ॥
एकादश्यां तथा रौप्यं ब्रह्मवर्चस्विनः सुतान् ।
द्वादश्यां जातरूपं च रजतं कुप्यमेवं च ॥ ७ ॥
ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यां तु सुप्रजाः ।
प्रीयन्ते पितरश्चास्य ये शस्त्रेण हता रणे ॥ ८ ॥
पक्षत्यादिविनिर्दिष्टान् विपुलान्मनसः प्रियान् ।
श्राद्धदः पञ्चदश्यां तु सर्वान्कामान्समश्नुते ॥ ९ ॥

सर्वं वा यदि वाप्यर्धं पादं वा यदि वाऽक्षरम् ।
सकाशाद्यस्य गृह्णीयान्नियतं तस्य गौरवम् ॥ १० ॥
नानृग्ब्राह्मणो भवति न वणिङ् न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्नस्तेयो न चिकित्सकः ॥ ११ ॥
परपूर्वापतिं धीरा वदन्ति दिधिषूपतिम् ।
द्विजोऽग्रेदिधिषूश्चैव यस्य सैव कुटुम्बिनी ॥ १२ ॥
यस्तयोरन्नमश्नाति स कुलाच्च्यवते द्विजः ॥ १३ ॥
अतिथिं पूजयेद्यस्तु श्रान्तं वा हृष्टमानसम् ।
सवृषं गोशतं तेन दत्तं स्यादिति मे मतिः ॥ १४ ॥
येषामन्नं विनाऽतिथिर्विप्राणां व्रजते गृहात् ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वं प्रतिपेदिरे ॥ १५ ॥
किं ब्राह्मणस्य पितरं किं वा पृच्छति मातरम् ।
श्रुतं चेदस्ति वेद्यं वा तन्मातापितरौ स्मृतौ ॥ १६ ॥
अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हानभिज्ञानात्सोऽपि धर्माद्धीयते ॥ १७ ॥
परिच्युतेष्टवस्थानान्निगरन्नेव तच्छुचि ॥ १८ ॥
निमन्त्र्य विप्रास्तदहर्वर्जयेन्मैथुनं क्षुरम् ।
प्रमत्ततां च स्वाध्यायं क्रोधं शोकं तथानृतम् ॥ १९ ॥
उपासनाग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।
पञ्चयज्ञान्नपक्तिश्च यच्चान्यद्गृह्यकृत्यकम् ॥ २० ॥
बह्वग्नयस्तु ये विप्रा ये वैकाग्नय एव च ।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम् ॥ २१ ॥
पूर्वाह्णे वैदिकं श्राद्धमपराह्णे तु पार्वणम् ।
एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥ २२ ॥
पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसंध्यासमीपतः ॥ २३ ॥
यस्य चैव गृहे विप्रो वसेत्कश्चिदभोजितः ।
न तस्य पितरो देवा हव्यं कव्यं च भुञ्जते ॥ २४ ॥

अतिथिर्यस्य वै ग्रामे भिक्षमाणः प्रयत्नतः ।
स चेन्निरसितस्तत्र ब्रह्महत्या विधीयते ॥ २५ ॥
अपि शाकंपचानस्य शिलोञ्छेनापि जीवतः ।
स्वदेशे परदेशे वा नातिथिर्विमना भवेत् ॥ २६ ॥
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
पितृषु दैवयज्ञेषु दाता स्वर्गं न गच्छति ॥ २७ ॥
श्राद्धेन यः कुरुते संगतानि न देवयानेन पथा स याति ।
विनिर्मुक्तं पिप्पलं बन्धतो वा स्वर्गाल्लोकाद्भ्रश्यति श्राद्धमित्रः॥
यत्प्रोक्षितं भवेन्मांसं ब्राह्मणानां च काम्यया ।
यथाविधिनियुक्तश्च प्राणानामेव चात्यये ॥ २९ ॥
यस्तु भक्षयते मांसं ब्राह्मणानां च काम्यया ।
स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते ॥ ३० ॥

( वृद्धमनुः )

श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥ ३१ ॥
यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम् ।
यश्च वेत्त्यात्मकैवल्यं पङ्क्तिपावनपावनाः ॥ ३२ ॥
यां कांचित्सरितं प्राप्य कृष्णपक्षे चतुर्दशी ।
यमुनाया विशेषेण ब्राह्मणो नियतेन्द्रियः ॥ ३३ ॥
हिरण्यं वैश्वदेवे दद्याद्वै दक्षिणां बुधः ।
पित्रे तु रजतं देयं शक्त्या भूमिगवादिकम् ॥ ३४ ॥
प्रोषितस्य यदा कालो गतश्चेद्द्वादशाब्दिकः ।
प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत् ॥ ३५ ॥

---

मिताक्षरायाम्—

अकामतस्त्वहोरात्रं शेषेषूपवसेदहः ॥ १ ॥
मानुषास्थि शवं विष्ठा रेतो मूत्रार्तवं वसा ।
स्वेदाश्रुदूषिका श्लेष्म मद्यं चामेध्यमुच्यते ॥ २ ॥

विष्णो हव्यं च कव्यं च ब्रूयाद्रक्षेति च क्रमात् ॥ ३ ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तद्वत्स्वहस्तं दद्युरेव ते ॥ ४ ॥
निष्के तु सत्यवचनं द्विनिष्के पादलम्बनम् ।
त्रिकादर्वाक्तु पुण्यं स्यात्कोशपानमतः परम् ॥ ५ ॥
विभक्ता वाऽविभक्ता वा सपिण्डाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रयः ॥ ६ ॥
वाक्पारुष्ये य एवोक्ता प्रतिलोमानुलोमतः ॥ ७ ॥
ब्राह्मणस्य वधे मौण्ड्यं पुरान्निर्वासनाङ्कने ।
ललाटे वाभिशस्ताङ्कः प्रयाणं गर्दभेन तु ॥ ८ ॥
सूतके तु कुलस्यान्नमदोषं मनुरब्रवीत् ॥ ९ ॥
बहूनामेककार्याणां सर्वेषां शस्त्रधारिणाम् ।
यद्येको घातयेत्तत्र सर्वे ते घातकाः स्मृताः ॥ १० ॥
ततो मुसलमादाय सकृद्धन्यात्तु तं स्वयम् ॥ ११ ॥
एतान्येव तथा पेयान्येकैकं तु त्र्यहं त्र्यहम् ।
अतिसांतपनं नाम श्वपाकमपि शोधयेत् ॥ १२ ॥
विद्वद्विप्रनृपस्त्रीणां नेष्यते केशवापनम् ।
ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः ॥ १३ ॥

( बृहन्मनुः )

दशाहाभ्यन्तरे बाले प्रमीते तस्य बान्धवैः ।
शावाशौचं न कर्तव्यं सूत्याशौचं विधीयते ॥ १४ ॥

---

पाराशरमाधवीये—

प्रजापतिर्हि यस्मिन्काले राज्यमभूभुजत् (?) ।
धर्मैकतानाः पुरुषास्तदाऽऽसन्सत्यवादिनः ॥ १ ॥
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रवर्तते ॥ २ ॥
द्विजान्विहाय संपश्येत्कार्याणि वृषलैः सह ।
तस्य प्रक्षुभितं राष्ट्रं बलं कोशं च नश्यति ॥ ३ ॥

संदिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥ ४ ॥
ब्राह्मणो वा मनुष्याणामादित्यस्तेजसामिव ।
शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम् ॥ ५ ॥
सत्यमेव परं दानं सत्यमेव परं तपः ।
सत्यमेव परो धर्मो लोकोत्तरमिति स्थितिः ॥ ६ ॥
सत्ये देवाः समुद्दिष्टा मनुष्यास्त्वनृतं स्मृतम् ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥ ७ ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
साक्षिधर्मे विशेषेण सत्यमेव वदेत सः ॥ ८ ॥
ऋत्विक्पुरोहितामात्याः पुत्राः संबन्धिबान्धवाः ।
धर्माद्विचलिता दण्ड्या निर्वास्या राजभिः पुरात् ॥ ९ ॥
ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः ॥ १० ॥
द्रव्यमस्वामिविक्रीतं मूल्यं राज्ञे निवेदितम् ।
न तत्र विद्यते दोषो न स्यात्तदुपविक्रयात् ॥ ११ ॥
आर्तस्य कुर्यात्सच्छंसन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम् ॥ १२ ॥
त एव दण्डपारुष्ये व्याप्य दण्डा यथाक्रमम् ॥ १३ ॥
यः कुमारीं मेषपशून् ऋक्षांश्च वृषभांस्तथा ।
वाहयेत्साहसं पूर्णं प्राप्नुयादुत्तमं वधे ॥ १४ ॥
महापापोपवक्तारो महापातकशंसकाः ।
आमध्यमोत्तमा दण्ड्या दद्युस्ते च यथाक्रमम् ॥ १५ ॥
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥ १६ ॥
अन्त्याभिगमने त्वङ्क्या कबन्धेन प्रवासयेत् ।
शूद्रस्तथाङ्क्य एव स्याद्दण्ड्यः स्याद्गमने वधः ॥ १७ ॥
अयोनौ गच्छतो योषां पुरुषं वापि मोहतः ।
चतुर्विंशतिको दण्डस्तथा प्रव्रजितो हि सः ॥ १८ ॥

यः कारणं पुरस्कृत्य व्रतचर्यां निषेवते ।
पापं व्रतेन संछाद्य बैडालं नाम तद्व्रतम् ॥ १९ ॥
सहस्रगुणितं दानं भवेद्दत्तं युगादिषु ।
कर्म श्राद्धादिकं चैव तथा मन्वन्तरादिषु ॥ २० ॥
वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ २१ ॥
दीपोत्सवचतुर्दश्यां कार्यं तु यमतर्पणम् ।
कृष्णाङ्गारचतुर्दश्यामपि कार्यं तथैव वा ॥ २२ ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ २३ ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय ते नमः ॥ २४ ॥
चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः ।
अमुक्तयोरस्तगतयोर्दृष्ट्वा स्नात्वा परेऽहनि ॥ २५ ॥
उपस्थाने च यत्प्रोक्तं भिक्षार्थं ब्राह्मणेन हि ।
तात्कालिकमिति ख्यातं तदत्तव्यं मुमुक्षुणा ॥ २६ ॥
सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति ।
उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः ॥ २७ ॥
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ।
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥ २८ ॥
जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् ।
हिरण्यधान्यगोवासास्तिलानां गुडसर्पिषाम् ॥ २९ ॥
मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च ।
आशौचं पक्षिणीं रात्रिं मृता मातामही यदि ॥ ३० ॥
श्वशुरयोश्च भगिन्यां च मातुलान्यां च मातुले ॥ ३१ ॥
ग्राममध्ये मृतो यावच्छवस्तिष्ठति कस्यचित् ।
ग्रामस्य तावदाशौचं निर्गते शुचितामियात् ॥ ३२ ॥

ग्रामेश्वरे कुलपतौ श्रोत्रिये च तपस्विनि ।
शिष्ये पञ्चत्वमापन्ने शुद्धिर्नक्षत्रदर्शनात् ॥ ३३ ॥
तिस्रः कोट्योऽर्धकोटी च यानि रोमाणि मानुषे ।
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति ॥ ३४ ॥
उग्रात्तु जातः क्षत्तायां श्वपाक इति कीर्त्यते ॥ ३५ ॥
ब्राह्मणस्य रणद्वारे पूयशोणितसंभवे ।
कृमिरुत्पद्यते यस्तु प्रायश्चित्तं कथं भवेत् ॥ ३६ ॥
गवां मूत्रपुरीषेण त्रिसंध्यं स्नानमाचरेत् ।
त्रिरात्रं पञ्चगव्याशी अधो नाभ्या विशुध्यति ॥ ३७ ॥
नाभिकण्ठान्तरोद्भूते व्रणे चोत्पद्यते कृमिः ।
षड्रात्रं तु तदा प्रोक्तं प्राजापत्यं शिरोव्रणे ॥ ३८ ॥
विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं चरेत् ।
तृतीये त्रिगुणं चैव चतुर्थे नास्ति निष्कृतिः ॥ ३९ ॥
अपात्रीकरणं त्वा····तप्तकृच्छ्रेण शुद्ध्यति ।
शीतकृच्छ्रेण वा शुद्धिमहः सांतपनेन वा ॥ ४० ॥
श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम् ।
तस्मात्प्रमाणमुभयं प्रमाणैः प्रापितं भुवि ॥ ४१ ॥
वाक्याभावे तु सर्वेषा देशदृष्टमनन्तयेत् ॥ ४२ ॥
यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशदृष्टः स उच्यते ॥ ४३ ॥
देशपत्तनगोष्ठेषु पुरग्रामेषु वादिनाम् ।
तेषां स्वसमयैर्धर्मः शास्त्रतोऽन्येषु तैः सह ॥ ४४ ॥
लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥ ४५ ॥
उभयाभ्यर्थितेनैव मया ह्यमुकसूनुना ।
लिखितं ह्यमुकेनेति लेखकः स्वं तु तल्लिखेत् ॥ ४६ ॥
शोधयेत्तं च छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञर्णचतुर्भागं दाप्यं तस्य च तद्धनम् ॥ ४७ ॥

यदि तस्मिन्दाप्यमाने भवेन्मोषे तु संशयः ।
मुषितः शपथं दाप्यो बन्धुभिर्वापि साधयेत् ॥ ४८ ॥
न प्रातर्न प्रदोषश्च संध्याकालोतिकाल हि(?) ।
मुख्याभावेऽनुकल्पश्च सर्वस्मिन्कर्मणि स्मृतः ॥ ४९ ॥
पीत्वा योऽशनमश्नीयात्पात्रे दत्तमगर्हितम् ।
भार्याभृतकदासेभ्य उच्छिष्टं शेषयेत्ततः ॥ ५० ॥
अनिन्दन्भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ।
पञ्चग्रासा महामौनं प्राणाद्याप्यायनं महत् ॥ ५१ ॥
महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः ।
वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते ॥ ५२ ॥
पित्रोरुपशमे स्त्रीणामूढानां तु कथं भवेत् ।
त्रिरात्रेणैव शुद्धिः स्यादित्याह भगवान्यमः ॥ ५३ ॥
नभस्यस्यापरः पक्षो यत्र कन्यां व्रजेद्रविः ।
स महालयसंज्ञः स्याद्गजच्छायाह्वयस्तथा ॥ ५४ ॥
सप्तहस्तेन दण्डेन त्रिंशद्दण्डनिवर्तनम् ।
तान्येव दश गोचर्मदाता पापैः प्रमुच्यते ॥ ५५ ॥
समानोदकभावस्तु निवर्तेताचतुर्दश ।
जन्मनामस्मृतेरेके तत्परं गोत्रमुच्यते ॥ ५६ ॥
आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः ।
काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम् ॥ ५७ ॥
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ।
आषाढीमवधिं कृत्वा यः पक्षः पञ्चमो भवेत् ॥ ५८ ॥
तत्र श्राद्धं प्रकुर्वीत कन्यास्थोऽर्को भवेन्न वा ॥ ५९ ॥

---

धर्मसिन्धौ—

विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्यं मङ्गलं मनुरब्रवीत् ॥ १ ॥

---

व्यवहारतत्त्वे—

नाध्यापयति नाधीते स ब्राह्मणब्रुवः स्मृतः ॥ १ ॥

---

दायतत्त्वे—

राज्ञा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्धं द्विजः पुनः ।
विद्वानशेषमादद्यात्स सर्वस्य प्रभुर्यतः ॥ १ ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञाता दाप्यस्तं दण्डमेव च ॥ २ ॥

---

दायक्रमसंग्रहे—

पतितस्तु सुतः क्लीबः पङ्गुश्चोन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगार्तो भर्तव्यास्ते निरंशकाः ॥ १ ॥
सामान्यं पुत्रकन्याऽऽधिः सर्वस्वं न्याययाचितम् ।
अदेयान्याहुरष्टैव यच्चान्यस्मै प्रतिश्रुतम् ॥ २ ॥

---

शंकरविजये—

पूज्येषु सेवका नीचाः पुण्यमार्गक्रियानुगाः ।
तत्तदेव पदं चापुर्यथा जातिकुलस्थितिः ॥ १ ॥
विप्राणां दैवतं शंभुः क्षत्रियाणां तु माधवः ।
वैश्यानां तु भवेद्ब्रह्मा शूद्राणां गणनायकः ॥ २ ॥

# मनुस्मृतिपद्यानुक्रमः।

**इति मनुस्मृतिपद्यानुक्रमः समाप्तः।**

# मन्वर्थमुक्तावल्युद्धृत-ग्रन्थ-ग्रन्थकृन्नामसूची ।